the *anvaya* and thus helps us in construing the verse properly. His rich quotations reveal his wide reading and sound scholarship. His preference for Kātantra and Śākaṭāyana grammars over that of Pāṇini, however, presents us some difficulty since most of us today are conversant only with Pāṇini's terminology To understand the theological implications of certain words (e. g, '*trigārava*', (I. 30), Lakṣmaṇa's commentary may be said to be indispensable. He has also an eye for poetic beauty and explains the figures of speech in the text; and his assistance is indeed great when puns are involved. To sum up, Lakṣmaṇa may be said to represent the best Jaina tradition in the study of Sanskrit classics

---

# यशोधरचरितम्

## सटीकम्

## प्रथमः सर्गः ।*

श्रीमदारब्धदेवेन्द्रमयूरानन्दनर्तनम् ।
सुव्रताम्भोधरं वन्दे गम्भीरनयगर्जितम् ॥ १ ॥

१. मुनिसुव्रतनामानं नमामि जिननायकम् ।
यद्ज्ञानदीपकीलेऽलं मदनः शलभोऽभवत् ॥

श्रीवीरणन्दी विजयी त्रिभूया-
द्विद्वान्विपश्चिज्जनहर्षकारी ।
यदीय काव्य( v. l वाक्य )श्रवणं जनानां
कवित्वशक्तिं कुरुते कृतार्थाम् ॥

वादिराजमुनिं नौमि मेदिनीतिलकं कविम् ।
यदीयरसनारङ्गे वाणी नर्तनमातनोत् ॥

अकारयदिमां टीकां चिक्कणो गुणरक्षणः ।
अकरोज्जिनदासोऽयं चिक्कणात्मजलक्ष्मणः । ( v. l लक्षणः )

आशीर्नमस्क्रियावस्तुनिर्देशो वापि तन्मुखमिति नान्दीमुखे मङ्गलार्थ-मिष्टदेवतानमस्कारमखण्डरूपकालङ्कारस्वरूपेणाह कविः—श्रीमदित्यादि। श्रीरस्यास्तीति श्रीमान्, आरब्धश्चासौ देवेन्द्रश्च आरब्धदेवेन्द्रः। 'कर्तरि निष्ठा स्नानभोजनपानाद्याः नान्ताः कर्तरि च सता' इति कातन्त्रसूत्रम्। श्रीमदारब्धदेवेन्द्र एव मयूरस्तस्यानंदाज्जातं नर्तनं यस्य सः। यदाह कालिदासः—

---

* Abbreviations used :—
का व्या सू—कातन्त्रव्याकरणसूत्राणि ।
का. रू.—कातन्त्ररूपमाला ।
शा व्या सू—शाकटायनव्याकरणसूत्राणि ।

अथ प्रजानामधिपः प्रभाते
जायाप्रतिग्राहितगन्धमाल्याम् ।
वनाय पीतप्रतिबद्धवत्सां
यशोधनो धेनुमृषेर्मुमोच ॥ [ रघुवंश, II. 1 ]

इति। अत्र पीतशब्दः कर्तरि निष्ठा स्यादिति। सुव्रत एवाम्भोधरः, तं, गम्भीरतया एव गर्जितं स्तनितं यस्य सः, तथोक्तम्। अन्वयस्तु—श्रीमदारब्धदेवेन्द्र-मयूरानन्दनर्तनम् सुव्रताम्भोधरं वन्दे। किमस्य श्लोकस्य नामधेयम्?

'ओजयोर्यगणो नाब्धेर्युग्मयोर्जगणेन च ।
श्लोकेषु कथ्यते पथ्या श्रोत्रपथ्या यतस्ततः ॥'

अस्माकं जिनसिद्धश्रीसूर्युपाध्यायसाधवः ।
कुर्वन्तु गुरवस्सर्वे निर्वाणपरमश्रियम् ॥ २ ॥

२. अस्माकमित्यादि । श्रीशब्दो मङ्गलवाची सर्वत्रापि योज्यः । जिनसिद्धश्रीसूर्युपाध्यायसाधवः सर्वे गुरवः—पञ्चपरमेष्ठिनोऽस्माकं निर्वाणपरमश्रियं—निर्वाणं मोक्षः; 'मुक्तिः कैवल्यनिर्वाण'मित्यमरः; तस्मिन् अधिकलक्ष्मीं कुर्वन्तु ॥

श्रीमत्समन्तभद्राद्याः काव्यमाणिक्यरोहणाः ।
सन्तु नः संततोत्कृष्टाः सूक्तिरत्नोत्करप्रदाः ॥ ३ ॥

३. श्रीमदित्यादि । संततोत्कृष्टाः काव्यमाणिक्यरोहणाः काव्यमेव माणिक्यं, तस्य रोहणाः; रोहणाद्रिः रत्नखनिरिति प्रसिद्धिः । श्रीमत्समन्तभद्राद्याः नोऽस्माकं सूक्तिरत्नोत्करप्रदास्सन्तु भवन्तु ॥

इतिहाससमासोऽयमत्रावहितचेतसाम् ।
आस्रवन्ति शुभान्युच्चैर्निर्जीर्यन्त्यशुभान्यपि[1] ॥ ४ ॥

४. इतिहासेत्यादि । अयमितिहाससमासः पुरातनचरितसंक्षेपः । अत्रास्मिन्, *अवहितचेतसां तन्मनसां श्रोतृजनानां, शुभानि मङ्गलानि, उच्चैरास्रवन्ति;* अशुभान्यपि निर्जीर्यन्ति ॥

---

[1] 'निजर्यन्ति P.

वर्धयत्यर्पं संवेग विधत्ते शुद्धदृष्टिताम्।
प्रध्वस्तीकुरुते व्याधीनाधीनपहरत्यलम् ॥ ५ ॥

५ वर्धयतीत्यादि । एप अय, तेषा संवेग वैराग्य, वर्धयति, शुद्धदृष्टिताम् सम्यग्दृष्टित्व, विधत्ते । व्याधीन् प्रध्वस्तीकुरुते—अप्रध्वस्तान् प्रध्वस्तान् कुरुते प्रध्वस्तीकुरुते, नाशयतीति यावत् । इत्यत्र ' कृभ्वस्तिषु विकारात् च्वि ' ( का रू II ४८५ ) चीचावर्णस्येत्वमिति कातन्त्रसूत्रम् । ( का रू II ४८८ ) आधीनलमपहरति ॥

श्रीपार्श्वनाथकाकुत्स्थचरितं येन कीर्तितम्।
तन श्रीवादिराजेन दृब्धा याशाधरी कथा ॥ ६ ॥

६ श्रीत्यादि । येन श्रीपार्श्वनाथकाकुत्स्थचरित, कीर्तित—कथित, तेन श्रीवादिराजेन—श्रीवादिराजनामधेयकविना, याशोधरी कथा—यशोधरसम्बन्धिनी कथा, दृब्धा—रचिता । ' ग्रथित ग्रथित दृब्धमि'त्यमर ॥

इहास्ति भारते वास्य देशे यौधेयनामनि ।
पुर राजपुर नाम्ना राजराजपुरोपमम् ॥ ७ ॥

७ इहेत्यादि । इह भारते—भरतसम्बन्धिनि वास्ये—क्षेत्रे यौधेयनामनि—यौधेयदेश, राजराजपुरोपम नाम्ना राजपुर पुरमस्ति ॥

कार्तस्वरमयो यस्य परिधिश्चुम्बिताम्बुद ।
भाति मध्यदिनार्कस्य परिवेप इवान्वहम् ॥ ८ ॥

८ कार्तस्वरेत्यादि । कार्तस्वरमय—कनकरचित चुम्बिताम्बुद यस्य पुरस्य परिधि—साल अन्वहमनवरत भाति—राजते । कथमिव ? मध्यदिनार्कस्य परिवेप इव—परिधिरिव । ' परिवेषस्तु परिधि'रित्यमर । ' मध्याच्छणदिना मक्च ' ( शा व्या सू III ; 114 ) इति मध्यंदिनस्य सिद्धि । इद शाकटायनसूत्रम् ॥

प्रासादशिखरप्रोतपद्मरागमरीचिभि ।
मध्याह्नाक्रान्तपो यत्र मिश्रो बालातपायते ॥ ९ ॥

९ प्रासादेत्यादि । यत्र प्रासादशिखरप्रोतपद्मरागमरीचिभि प्रासादाना—सौधानां । ' प्रासादो देवभूभुजा'मित्यमर । शिखरेषु—अग्रेषु । ' शिरोऽग्र शिखर—वा ना ' इत्यमर । प्रोता—स्यूता , पद्मरागा तेषा मरीचिभि किरणै , ' भानु

---

१ वर्धयत्येव M २ 'काकुत्स्थ P , M ३ दृब्धा P

करो मरीचिः स्त्रीपुंसयो'रित्यमरः। मिश्रो मीलितो मध्याह्नार्कातपः द्विगोरह्नात् अन्नन्तादहन्‌शब्दादट् समासाह्नो भवति, मध्यं च तत् अहश्च मध्याह्नः, तस्मिन्। अर्कातपः–खरकिरणप्रकाशः, बालातपायते–बालातप इवाचरति। 'कर्तुरायः सलोपश्चे'त्यायप्रत्ययः। 'अय्यन्ताच्च' (का. व्या. सू. III. 78) इत्यात्मनेपदम्, अयं नामधातुः॥

यन्नित्यं[1] धनदावासकेतुभिर्वातकम्पितैः।
दूरादाह्वयतीवोच्चैरर्थिनः सर्वदिङ्मुखैः[2]॥ १०॥

१०. यन्नित्यादि। यत्पुरं वातकम्पितैर्धनदावासकेतुभिः–धनदानां धनिनामावासाः–गृहाणि, तेषां परितः स्थितैः केतुभिः–ध्वजैः उपलक्षितं सत्, सर्वदिङ्मुखैः आर्थिनो–याचकान् दूरात् आह्वयतीव॥

यस्मिन्नसमलावण्यनिर्मितावयवा अपि।
सर्वाङ्गमधुरायन्ते भोगिनां मृगलोचनाः॥ ११॥

११. यस्मिन्नित्यादि। यस्मिन् पुरे असमलावण्यनिर्मितावयवा अपि मृगलोचनाः–मृगस्य लोचने इव लोचने यासां ताः मृगलोचनाः रमण्यः। भोगिनां भोगवतां जनानां सर्वाङ्गमधुरायन्ते सर्वावयवेषु प्रिया भवन्ति। 'स्वादुप्रियौ तु मधुरौ' इत्यमरः। अपिशब्दः शङ्कामाचष्टे। 'गर्हासमुच्चयप्रश्नशङ्कासम्भावनास्वपि' इत्यमरः। असमलावण्यनिर्मितप्रतीकाः वनिताः जनानां सर्वाङ्गस्वादुत्वं कथमुपयान्तीति विरोधः॥

यत्र प्रत्युरसं नारीपयोधरपरिस्पृशः।
कामदावाग्निसंतापान्मुच्यन्ते[4] युवभूभृतः॥ १२॥

१२. यत्रेत्यादि। यत्र पुरे। प्रत्युरसं उरसि। 'प्रतेरुरससप्तम्या' (cf. का. व्या. सू. II. 390) इत्यत्समासान्तः। नारीपयोधरपरिस्पृशः युवभूभृतः कामदावाग्निसंतापान्मुच्यन्ते। दावाग्निसंतप्ताः पर्वताः मेघस्पर्शवन्तश्चेत्तापान्मुच्यन्ते इति भावः॥

यत्र च स्पृहयालुभ्यो दायं दायं व्ययीकृताः।
अपि प्रत्यहमेधन्ते सतां विद्या इव श्रियः॥ १३॥

१३. यत्र चेत्यादि। यत्र च स्पृहयालुभ्यो–यात्यकेभ्यो दायं दायं–दत्त्वा दत्त्वा। 'णमाभीक्ष्ण्ये द्विश्च' (का. व्या. सू. IV. 435) इति द्विपदम्।

---

१ नन्नित्यं M २. सर्वदिग्गणान् M ३ तस्मिन्नसम° M ४ मूर्च्छन्ते M

च्ययीकृता अव्यया व्यया कृता व्ययीकृता। श्रियोऽपि प्रत्यहमेधन्ते। प्रतिदिवस प्रवर्धमाना भवन्ति। कथमिव ? सता विद्या इव ॥

अवाच्या[1] दिशि तस्यास्ति चण्डमारीति देवता।
एकान्तत प्रिया यस्या प्राणिनामुपसहृति ॥ १४ ॥

१४ अवाच्यामित्यादि। तस्य पुरस्य अवाच्या दिशि चण्डमारीति देवता अस्ति। यस्या प्राणिनामुपसहृति एकान्ततोऽत्यर्थ, प्रिया।

या च सत्त्वोपघातेन यथाकालमनर्चिता।
राज्यराष्ट्रोपघाताय रौद्रमूर्ति प्रकल्पते ॥ १५ ॥

१५ या चेत्यादि। सत्त्वोपघातेन प्राणिवधेन। 'सत्त्वोऽस्त्री जन्तुषु क्लीब विद्यमाने बले गजे' इति विश्वप्रकाश। यथाकाल—कालमनतिक्रम्य, अनर्चिता चेत् राज्यराष्ट्रोपघाताय—राज्ञ भाव राज्यम्। 'यण् च प्रकीर्तित' (का व्या सू II 301) इति कातन्त्रसूत्रम्। नृपतित्वमित्यर्थ यावत्। राष्ट्र देश। तयोरुपघाताय वधाय। 'घातोन्माथवधा अपि' इत्यमर। रौद्रमूर्ति प्रकल्पते 'लो कृप' इति कृपासामर्थ्य इति धातो ऋकारस्य लृकारादेश जायते ॥

आराधिता तु तत्पौरैरुचितोपक्रमण या।
दुर्भिक्षमारक याधिप्रध्वंसेन[2] प्रसीदति[3] ॥ १६ ॥

१६ आराधितेत्यादि। तत्पौरै उचितोपक्रमेण उचितपूजया, 'उपक्रमस्तु पूजाया प्रारम्भे तु पुमानयमि'ति विश्वप्रकाश। आराधिता देवी दुर्भिक्षमारकव्याधिप्रध्वंसेन प्रसीदति॥

इषे चैत्रे च मास्यस्या[5] पुर पौरैर्नृपान्विते।
यात्रा निर्वर्त्यते चित्तप्रसादाद्वरलिप्सुभि ॥ १७ ॥

१७ इषे इत्यादि। इषे आश्वयुजे, चैत्रे मास, चित्तप्रसादात् वरलिप्सुभि नृपान्वितै पौरै अस्या पुर अग्रत, यात्रा प्रस्थान निर्वर्त्यते क्रियते ॥

न्यवेदयदिवागत्य मधुस्तस्यै निजागमम्।
माकन्दकलिकास्वादमत्तकोकिलनिस्वनै ॥ १८ ॥

१८ न्यवेदयदित्यादि। मधु वसन्त। तस्यै निजागम—स्वकीय गमन। 'स्वके नित्ये निज त्रिषु' इत्यमर। 'यात्रा व्रज्याभिनिर्याण प्रस्थान

---

१ अराच्या P २ मरक M, P ३ ध्वसेन M ४ प्रसीदति A, T
५ मासेऽस्या A, M, P

गमन गम ' इत्यमर । माकन्दकलिकास्वादमत्तकोकिलनिस्वने –माकन्दा चूता, तेषां कलिका –कोरका, तासा आस्वाद भक्षणम्, तेन मत्ताश्च ते कोकिलाश्च, तेषा, निस्वनै –ध्वनिभि , न्यवेदयदिव व्यजिज्ञपयदिव ॥

उद्गिरन् दिशि दिश्युच्चे रक्ताशोकस्य मञ्जरी ।
जहारेव[1] बलिं तस्यै[2] स काल स्वस्य शोणितैः ॥ १९ ॥

१९ उद्गिरन्नित्यादि । रक्ताशोकस्य मञ्जरी दिशि दिशि उच्चै उद्गिरन्, स काल –वसन्त स्वस्य–आत्मीयस्य, शोणितै –मांसै , तस्यै बलि–पूजा, जहारेव–दत्तवानिव। 'शोणित रुधिरे मासे पद्मरागप्रवालयो ' इति वैजयन्ती ॥

देवतावासचूताना[3] शाखासु परपुष्टकै ।
शून्यमासैरिवातस्थे मधुनोपायनीकृतै ॥ २० ॥

२० देवतेत्यादि । देवतावासचूताना शाखासु परपुष्टकै –कोकिलै, मधुना उपायनीकृतै शून्यमासैरिवातस्थे–'ष्ठा गतिनिवृत्ता'विति धातो भावे लेट्, आत्मनेपदम् ॥

ततस्तदर्चनाकाल विलम्बयितुमक्षम ।
देवतावासमायासीन्मारिदत्तो नराधिप ॥ २१ ॥

२१ तत इत्यादि । ततोऽनन्तर मारिदत्तो नराधिप तदर्चनाकाल विलम्बयितुमक्षम सन् देवतावासमायासीत्। 'यरलमतां सक् च' ( शा व्या सू IV ॥ 72 ) इत्यादन्ताना वसेरन्तश्चेतीडागम सेरन्त इति ॥

पौरा पुरपतस्तस्य नियोगादविलम्बितम्[4] ।
आनिन्युरखिलाशाभ्यो युग्म युग्म तनूभृताम ॥ २२ ॥

२२ पौरा इत्यादि। पौरा पुरपते तस्य नियोगात्–शासनात्, 'नियोग शासन च ॥ ' इत्यमर । अविलम्बित–झटिति, तनूभृता युग्म युग्म–प्राणिना मिथुन मिथुन, अखिलाशाभ्य आनिन्यु ॥

कुक्कुटच्छागसारङ्गवराहमहिषादय ।
शुशुभुर्देवतावासे दीर्घबन्धनपीडिता ॥ २३ ॥

२३ कुक्कुटेत्यादि। देवतावासे–चण्डमारीगृहे, दीर्घबन्धनपीडिता दीर्घ बन्धनेन पीडिता । 'दीर्घबन्धन' शब्दस्य कर्णाटभाषया 'दावणी'ति

---

१ जुहावव P, जहुरेव M  २ तस्य P  ३ दवतागुरुभूताना M
४ °विलम्बिता M

प्रसिद्धिः। 'तिरश्चां कण्ठदाम्नि स्यात् शृङ्खले दीर्घबन्धनमि'ति विश्वप्रकाशः। कुक्कुटश्च छागश्च सारङ्गश्च वराहश्च महिषश्च–कुक्कुटच्छागसारङ्गवराहमहिषाः आद्यौ येषां ते प्राणिनः–तिर्यञ्च, चुक्रुशुः आक्रोशं कृतवन्तः॥

तद्ध्वनिस्फारसंपातान्निर्भिन्ना तत्र तत्र भूः।
विवृताधोगतिद्वारबहुरन्ध्रेव निर्बभौ॥ २४॥

२४. तद्ध्वनीत्यादि। तद्ध्वनिस्फारसंपातात्–तेषां ध्वनिः शब्दः, तस्य स्फारसंपातात्–पृथुलसंपातात्, निर्भिन्ना तत्र तत्र भूः बभौ। कथमिव? विवृताधोगतिद्वारबहुरन्ध्रेव–विवृता चासौ अधोगतिश्च नरकः, तस्य द्वारं, तस्य बहूनि रन्ध्राणि–छिद्राणि, यस्याः सा॥

प्रभुरुत्खातखड्गस्तु चण्डकर्माणमादिशत्।
मृग्यतां मर्त्ययुगलं शुभलक्षणसंभृतम्॥ २५॥

२५. प्रभुरित्यादि। उत्खातखड्गः प्रभुस्तु शुभलक्षणसंभृतं मर्त्ययुगलं मृग्यताम्–अन्वेषणं क्रियताम् इति चण्डकर्माणमादिशत्। चण्डकर्मनामधेयं 'तलार' माज्ञापितवान्॥

तस्मिन् मया स्वहस्तेन देव्यै व्यापादिते सति।
पौरास्तांस्तान्विनिघ्नन्तु जीवांस्तिर्यक्प्रचारिणः[1]॥ २६॥

२६. तस्मिन्नित्यादि। तस्मिन् मिथुने मया स्वहस्तेन देव्यै व्यापादिते–हिंसिते सति। 'क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः, न च कर्मे'ति चतुर्थी। पौरास्तांस्तान्–तिर्यक्प्रचारिणो जीवान्, विनिघ्नन्तु–विहिंसनं कुर्वन्तु॥

अन्यथा विधिविध्वंसो देव्यै[2] कोपमुपानयन्।
बालस्त्रीपशुवृद्धानां विप्लवाय विजृम्भते॥ २७॥

२७. अन्यथेत्यादि। विधिविध्वंसः देव्यै अन्यथा कोपमुपानयन् बालस्त्रीपशुवृद्धानां विप्लवाय–दुःखाय। 'विप्लवः स्यादुपप्लवे' इति विश्वप्रकाशः। विजृम्भते एधते। यथाह वादीभसिंहः—

"अपकुर्वति कोपश्चेत् किं न कोपाय कुप्यसि।
त्रिवर्गस्यापवर्गस्य जीवितस्य च नाशिने॥" इति।

[ क्षत्रचूडामणि II 42 ]

'देव्याः कोपमुपानयन्' इति पाठो न करणीयः॥

---

१ °सवाघान् T २ °प्रमारिण T ३ देव्या P, M Ar

इति स्वामिनियोगेन चण्डकर्मा कृतत्वरः[1]।
प्रस्थाप्येतस्ततो भृत्यान् स्वयं चान्वेष्टुमव्रजत् ॥ २८ ॥

२८. इतीत्यादि । *इति स्वामिनियोगेन चण्डकर्मा कृतत्वरः* सन् इतस्ततः भृत्यान् प्रस्थाप्य स्वयं च अन्वेष्टुम् अव्रजत् ॥

अस्मिन्नवसरे धीमान् पञ्चशत्या सुसंयतैः ।
आगतस्तत्पुरोद्यानं सुदत्तो मुनिपुङ्गवः ॥ २९ ॥

२९. अस्मिन् इत्यादि । अस्मिन् अवसरे धीमान् कोविदः, मुनिपुङ्गवः सुदत्तः–सुदत्तनामधेयो यतिः । पञ्चशत्या– 'विंशत्याद्यास्सदैकत्वे' इत्यमरः । सुसंयतैः मुनिभिः सह तत्पुरोद्यानम् आगतः ॥

स त्रिदोषविनिर्मुक्तः[2] स त्रिदण्डविवर्जितः ।
स त्रिशल्यापविध्वंसी स त्रिगारवदूरगः[3] ॥ ३० ॥

३०. स इत्यादि । स मुनिः *त्रिदोषैर्विनिर्मुक्तः*–रागद्वेषमोहाः त्रिदोषाः तैः मुक्तः सः त्रिदण्डविवर्जितः–मनोवाक्कायदण्डाः, तैः विवर्जितः । त्रिशल्यापविध्वंसी–मिथ्या माया निदानाख्यानि शल्यानि । तेषामपविध्वंसी । त्रिगारवदूरगः ऋद्धि–रस–सादाख्यानि गारवाणि गुरुत्वानि । तैर्दूरगः ॥

स सप्तभयनिर्मुक्तः सत्त्वानामभयप्रदः ।
स स्वाध्यायपरो नित्यं स शुद्धज्ञानदीधितिः ॥ ३१ ॥

३१. स इत्यादि । स मुनिः सप्तभयनिर्मुक्तः–इहलोकपरलोकत्राणागुप्तिमरणवेदनाकस्मिकभयेभ्यो निर्मुक्तः । सत्त्वानां प्राणिनां अभयप्रदः, स तु स्वाध्यायपरः जपे तत्परः । 'स्वाध्यायः स्याज्जपः' इत्यमरः । स मुनिः शुद्धज्ञानदीधितिः–निर्मलज्ञानप्रकाशः ॥

स एकं तपसां धाम स व्रतानां[4] महोदधिः ।
स भव्याम्बुजतिग्मांशुः स शीलाचारनिर्मलः ॥ ३२ ॥

३२. स इत्यादि । स एकं तपसां धाम–तेजो वा गृहं वा । 'गृहदेहत्विट्प्रभावा धामान्यथे'त्यमरः । स मुनिः व्रतानां महोदधिः भव्यांबुजतिग्मांशुः–भव्या एव अम्बुजानि, तेषां तिग्मांशुः, सूर्यः, शीलाचारनिर्मलः–शीलं सुचरितं,

---

[1] चण्डकर्मैकतत्परः M [2] दोषद्वयनिर्मुक्तः P [3] त्रिगारविदूरगः T
[4] The commentary notes the alternate reading सुव्रतानां and rejects it.

'शुचौ तु चरिते शील'मित्यमर । शील च आचारश्च शीलाचारौ, ताभ्या निर्मल, सुव्रताना महोद्‌वितिरिति पाठश्चेत् प्रक्रमभङ्गो भवति ॥

स शासितव्रतै सार्धमासीन पावने क्वचित्।
मार्गातिचारनियम तत्परा निरवर्तयत् ॥ ३३ ॥

३३ स इत्यादि । शासितव्रतै –यतिभि सार्ध, पावने–पवित्रे, क्वचिद्वा ग्विपये प्रदेशे प्रतिष्ठमान तत्पर । तयो शीलाचारयो निरतो भूत्वा, मार्गातिचारनियम–मार्ग अतिचार तस्य नियमो व्रत तन्निरवर्तयत्–अकृत ॥

तत कृतापवासाया तद्दिने मुनिसहतौ[1]।
अनुजग्राह भिक्षायै[2] स मुनि क्षुल्लकद्वयम ॥ ३४ ॥

३४ तत इत्यादि । तद्दिने मुनिसहतौ–मुनिसमुदाये कृतोपवासाया सत्या ततोऽनन्तर स मुनि सुदत्ताचार्य क्षुल्लकद्वय–ब्रह्मचारियुगल, भिक्षायै अनुजग्राह– अनुग्रह कृतवान् ॥

प्रणिपत्य मुनि गच्छत् तच्च तच्चण्डकर्मणा।
जगृहे प्रथम पश्चान्निन्ये राजपुरेश्वरम् ॥ ३५ ॥

३५ प्रणिपत्येत्यादि । मुनि प्रणिपत्य भिक्षायै नगर गच्छत् तद्युगल च तच्चण्डकर्मणा राजशासनात् मृग्यमाणप्रसिद्धतत्कारवरेण प्रथम–प्रथमकाले । 'कालाध्वनोरत्यन्तसयोगे द्वितीये'ति (cf Panini II iii 5) सप्तम्यर्थ द्वितीया । जगृहे–स्वीकृतम् । पश्चाद् अन्ते, राजपुरेश्वर मारिदत्त निन्ये प्रापितम् ॥

तदाभयरुचिर्वाचमनुजामित्यवोचत।
मातश्चेत समाधेहि मा स्म भूत्वार्भय कृथा ॥ ३६ ॥

३६ तदेत्यादि । तदा–तदानीं । अभयरुचि –अभयरुचिकुमार । अनुजा स्वसारम् अभयमतीं वाचमित्यवोचत । द्विकर्मकम् । 'ब्रुवो वचि' (का व्या सू III 211) रिति ब्रूधातोर्वचिरादेश । 'अणासुवचिल्यातिे'रिति (का व्या सू आख्यातप्रकरणे, II 62) लुङि 'सिंचि ह्व' इति लुङि अण न भवति । 'अणि वचेरोडुपधाया' (का व्या सू III 6 94) इति वचेरुपधाया ओद्भवतीति । के धातवो द्विकर्मका ?

'दुह याचि रुधि प्रच्छि भिक्षि चि ब्रू ह्व शास्ति चिञ् नहि वहि निक्रञ् चोदित द्विणिति द्विकर्मकमिति ।'

---

[1] सविर Ar [2] मुनिसहतो T [3] भिक्षायै T

मातः—भो अम्ब, चेतः—मानसं, समाधेहि—सम्यगावह । मृत्योः भयं मा स्म कृथाः—मा स्म कार्षीः । 'मायोगे थतनि'त्यडागमो न भवति ॥

किं न वेत्सि चिराभ्याससुसहं दुःखमावयोः ।
कथं[1] वा दुःखनिर्मुक्तिः काये तत्कारणे नृणाम् ॥ ३७ ॥

३७. किमित्यादि । आवयोः दुःखं चिराभ्याससुसहं न वेत्सि किं ? नृणां—नराणां । 'नुर्वा' ( शा. व्या. सू., I. ii. 141 )—नृशब्दस्य सनादामि वा दीर्घः । तत्कारणे दुःखस्य हेतौ, काये दुःखनिर्मुक्तिः कथं वा स्यात् ॥

तस्मादवश्यभोक्तव्ये किमुद्वेगः करिष्यते[2] ।
किं च तीव्रं तपः प्राहुः परीषहजयं बुधाः ॥ ३८ ॥

३८. तस्मादित्यादि । तस्मात्कारणादवश्यभोक्तव्ये उद्वेगः क्लेशः किं करिष्यते । तथा हि—बुधाः परीषहजयं बाधाजयं च, किञ्च अवाग्विषयं तीव्रं तपः प्राहुः । क्षुधस्याग्नीनामडादयः पञ्च । तत्संयोगात् क्षुधः आहारेच्छाः ॥

अग्रजस्य निशम्योक्तिमुवाचाभयमत्यपि ।
आवयोरस्ति किं भीतिर्ज्ञातपूर्वापरान्तयोः ॥ ३९ ॥

३९. अग्रेत्यादि । अभयमती अनुजा । अग्रजस्य अभयरुचिकुमारस्य उक्तिं निशम्य उवाच । ज्ञातपूर्वापरान्तयोरावयोः भीतिरस्ति किम् ॥

इदमेव हि विद्वत्त्वमिदमेव हि तत्फलम् ।
यन्मनो विदुषामुच्चैर्माध्यस्थ्यं[3] सुखदुःखयोः ॥ ४० ॥

४०. इदमित्यादि । विदुषां—बुधानां यन्मनः—चित्तं सुखदुःखयोरुच्चैः माध्यस्थ्यं मध्यस्थभावेन तिष्ठति । इदमेव हि विद्वत्त्वं विदुषां भावः । इदमेव वैदुष्यस्य फलं हि ॥

आश्वासयन्तावन्योन्यमिति तौ राजपुत्रकौ ।
आसेदतु[4]रनाशङ्कौ चण्डमारीनिकेतनम् ॥ ४१ ॥

४१. आश्वासयन्तावित्यादि । अन्योन्यं परस्परं; आश्वासयन्तौ इति अनाशङ्कौ तौ राजपुत्रकौ चण्डमारीनिकेतनम्, आसेदतुः जग्मतुः ॥

रक्तसंमार्जिता रक्ता नित्यं यस्याजिरक्षितिः ।
प्रसारितेव जिह्वोच्चैर्देव्या रक्तासवेच्छया ॥ ४२ ॥

४२. रक्तेत्यादि । यस्य—चण्डमारीनिकेतनस्य रक्तसंमार्जिता नित्यं रक्ता, अजिरक्षितिः—अङ्गणभूमिः, 'अङ्गणं चत्वराजिरे' इत्यमरः । रराज । कथमिव ?

---

[1] कदा P. [2] करिष्यति M. [3] °मध्यस्थं P, Ar [4] आसीदतु...M, Ar.

रक्त सर्वेच्छया–रुधिरपानेच्छया, 'आसन्नो मधुभोगयो'रिति वैजयन्ती। चण्डमार्या उच्चैः प्रसारिता जिह्वेव ॥

मांसस्तूपा[1] स्वयं यत्र मक्षिकापटलावृता ।
उर्दितांश्चण्डमार्येव बहुभक्षणदुर्जरा ॥ ४३ ॥

४३ मांसेत्यादि। यत्र स्वयं मक्षिकापटलावृता–मक्षिकाणां पटल–समूहः, 'समूहे पटलं न ना'त्यमरः, तेनावृता मांसस्तूपा–मांसराशयः, बभुः कथमिव? चण्डमार्या बहुभक्षणदुर्जरा सन्तः छर्दिता इव ॥

नवैर्नरशिरोभिर्यत्प्राकारशिखरोद्धृतैः ।
अन्वद्रीवाशुं जीवाना देवता बहुभिर्मुखैः ॥ ४४ ॥

४४ नवैरित्यादि। यत्प्राकारशिखरोद्धृतैः–यस्य देवताया निलयस्य प्राकारः–परिधिः, तस्य शिखराणि–शृङ्गाणि, तैः उद्धृतैः। नवैः–नूतनैः। नरशिरोभिः चण्डमारी रराज। कथमिव? बहुभिः मुखैः जीवानां अन्वेष्ट्रीव। 'कर्तृकर्मणोः कृति नित्य' मिति (का० रू० I ४१८) कर्मणि षष्ठी ॥

राज्ञि सन्निहिते तस्मिन्नाशिषे[2] प्रेरितौ[3] जनैः ।
तानाशिवादमीदृक्षमध्यैपातां मनीषिणौ ॥ ४५ ॥

४५ राज्ञीत्यादि। तस्मिन्–चण्डमारीसद्मनि। राज्ञि–मारिदत्ते। सन्निहिते–सन्नद्धे सति। जनैः आशिषे–आशीर्वादाय। 'आशीरुरगदंष्ट्रायां मङ्गलाकाङ्क्षयोः स्त्रियामथे'ति विश्वप्रकाशः। चोदितौ–प्रेरितौ। मनीषिणौ बुधौ तां ईदृक्षं आशीर्वादं, अध्यैपातां पठितवन्तौ। 'इङ् अध्ययने' इति धातोः लुङात्मनेपदप्रथमपुरुषद्विवचनम्। इङि कादध्युपसर्गे न व्यभिचरति 'इवर्णादृश्विश्रिडाङ्शीङ' (का० रू० II २३७) इति इडागमो न भवति ॥

सर्वसत्त्वहितो यस्तु सर्वलोकहितप्रदः[4] ।
विदध्यास्तेन धर्मेण राजन् राजन्वतीं क्षितिम् ॥ ४६ ॥

४६ सर्वेत्यादि। भो राजन्, यो धर्मः सर्वसत्त्वहितः–सकलप्राणिभ्यो हितः, सर्वलोकहितप्रदः–सकलजनेभ्यो हितं प्रयच्छतीति तथोक्तः। तेन धर्मेण क्षितिं राजन्वतीं–सुराजयुक्तां 'सुराज्ञि देशे राजन्वानि'त्यमरः। विदध्याः–क्रियाः ॥

---

१ °सूपा M  २ वर्जिता° M Ar  ३ °वाय P  ४ °शिरा P
५ नोदितौ P चोदितौ M, Ar  ६ °सुखप्रदः M, P, T, Ar

मारिदत्तस्तु तौ दृष्ट्वा निर्भयस्पष्टभाषिणौ।
प्रशान्तश्चिन्तयामास विस्मयस्मेरलोचनः ॥ ४७ ॥

४७. मारिदत्त इत्यादि । निर्भयस्पष्टभाषिणौ—निर्भयात् स्पष्टं—व्यक्तं, भाषिणौ—वदन्तौ; दृष्ट्वा विस्मयस्मेरलोचनः—विस्मयेन आश्चर्येण विस्तृते वितते लोचने यस्य सः तथोक्तः । मारिदत्तस्तु प्रशान्तो भूत्वा चिन्तयामास ॥

देवद्वन्द्वमिदं किं नु मानवाकारवञ्चितम्।
उत स्विन्नागमिथुनं निर्जितस्मरतत्प्रियम् ॥ ४८ ॥

४८. देवेत्यादि । इदं मानवाकारवञ्चितं देवद्वन्द्वं किं नु । उत अथवा, निर्जितस्मरतत्प्रियं नागमिथुनं स्वित् ॥

न कदाचिन्मया दृष्टमभिरूपकमीदृशम्।
अहो चिराय मे जाता नेत्रसृष्टिः[४] फलावहा ॥ ४९ ॥

४९. नेत्यादि । कदाचित्—जातु, ईदृशमभिरूपकं—मनोहरं रूपं मया न दृष्टं; मे—मम, नेत्रसृष्टिः—नयननिर्माणं, चिराय—चिरस्य फलावहा जाता, अहो आश्चर्यम् ॥

अपि चोत्खातखड्गं मां दृष्ट्वा देवीं च निष्कृपाम्।
न चित्तमनयोस्त्रस्तमहो शौर्यमनुत्तरम् ॥ ५० ॥

५०. अपीत्यादि । अपिशब्दः शङ्कायां वर्तते । उत्खातखड्गं—कोशात् निसृष्टासिं, मां, निष्कृपां देवीं च दृष्ट्वा अनयोश्चित्तं न त्रस्तं, शौर्यं अनुत्तरं अहो ॥

इत्यपृच्छदभिव्यक्तं कौ युवां कुत आगतौ।
किंकुलौ किंनिमित्तं वा बाल्ये भोगास्पृहावुभौ ॥ ५१ ॥

५१. इतीत्यादि । युवां कौ, कुतः—कस्माद्देशादागतौ, किंकुलौ इत्येकपदं, 'किमः क्षेप' इति समासः; किमन्वयवन्तौ । उभौ बाल्ये किं निमित्तं वा भोगास्पृहौ जातौ इति व्यक्तं अपृच्छत् ॥

ततोऽभयरुचिर्धीमांस्तस्योत्तरमुदाहरत्।
वाङ्मयूखैर्निराकुर्वन् दुरन्तं दुरितं तमः ॥ ५२ ॥

५२. तत इत्यादि । ततः—अनन्तरं, धीमान्—सूरिः, अभयरुचिः दुरन्तं दुरितं तमः, वाङ्मयूखैः—दन्तकान्तिपरिकलितवचननिचयैः निराकुर्वन्—तिरस्कुर्वन् तस्य उत्तरमुदाहरत्—दत्तवान् ॥

---

१ निर्भयो P. २ विहित° M. ३ उतश्विनाग° P. ४ °दृष्टि° T.

आवयोश्चरितं राजन् धार्मिकेभ्यो हि[1] रोचते।
अधर्मरसिकश्चासि त्वं तत्किमभिलप्यते[2] ॥ ५३ ॥

५३. आवयोरित्यादि। भो राजन्, आवयोश्चरितं धार्मिकेभ्यो रोचते। 'यस्मै दित्सा रोचते धारयते वा तत्संप्रदानमिति (का. व्या. सू. II. 216) चतुर्थी। हि—यस्मात् कारणात् त्वमधर्मे रसिकोऽसि, तस्मात्कारणात् किमभिलप्यते—किमुच्यते, 'हि हेतावधारणे' इत्यमरः॥

प्रकृतिर्विपरीता न क्षमते गुणदर्शनम्।
पित्तज्वरवतः क्षीरं मधुरं नावभासते ॥ ५४ ॥

५४. प्रकृतिरित्यादि। विपरीता प्रकृतिर्गुणदर्शनं न क्षमते। कथमिव पित्तज्वरवतः—पित्तज्वरयुक्तस्य, क्षीरं—दुग्धं, मधुरं—स्वादु नावभासते—न प्रतिभाति॥

तदलं कथयास्माकं कुरु पथ्यं यदात्मनः।
यदच कर्मानुरूपं नस्तदस्तु प्रगुणा वयम् ॥ ५५ ॥

५५. तदित्यादि। तत्—तस्मात्, अस्माकं कथया अलं निवारणं। 'अलंभूषणपर्याप्तिशक्तिवारणवाचकं' मित्यमरः। आत्मनो—भवतो, यत् पथ्यं तत् कुरु, नोऽस्माकं यदनुरूपं कर्म अस्ति तदस्तु वयं प्रगुणाः—निर्घृणाः॥

इत्युक्तस्तेन निस्त्रिंशं निरस्य रचिताञ्जलिः।
निर्वेदन्[3] नृपो[4] भूयः[5] कुमारोऽप्यब्रवीदिदम् ॥ ५६ ॥ §

५६. इतीत्यादि। तेन अभयरुचिना, इत्युक्तः नृपः निस्त्रिंशं—खड्गं, निरस्य—त्यक्त्वा, रचिताञ्जलिः भूत्वा, निर्वेदन्—निर्वेदनं कृतवान्। कुमारोऽपि भूयः पुनरिदमब्रवीत्॥

तदास्थानसरः सर्वं करवारिजकुड्मलैः।
पूजयामास बालेन्दुं धर्मामृतरसच्युतम्[6] ॥ ५७ ॥ †

५७. तदेत्यादि। तदा—तस्मिन् काले सर्वं आस्थानसरः—सकलं सभासरोवरं, करवारिजकुड्मलैः—कराः हस्ताः, ते एव वारिजानि, तेषां, कुड्मलैः—मुकुलैः।

---

१ ऽपि P, T, Ar. २ ॰लप्यते Ar. ३ विरराम P. ४ नृपः P. ५ पाग्रात् P. § Between this and the next verse, P. has the following additional verse :—

निवार्य सकलं घोरं योगिनीध्वानमस्फुटम्।
पद्मासनमध्युष्य कृत्वा धाम सुमावहम्॥

६ ॰च्युतिम् M. † P takes this verse to form a युगल with निवार्य सकलं...above.

धर्मामृतरसच्युतम्–धर्ममेव अमृत, तस्य रस, तस्मात् च्युत–स्रसिग, बालेन्दु–बालकोत्तमम्। 'सिंहशार्दूलनागाद्या पुंसि श्रेष्ठार्थगोचरा' इत्यमर । पूजयामास–ननाम। लोके कासार कमलमुकुलैरमृतस्रावण बालेन्दु–बालचन्द्र निरीक्ष्य नम्रो भवतीति भाव ॥

> भो भो नराधीश्वर साधु साधु
> त्वया मतिर्धर्मपथे निबद्धा।
> कालेन भव्यत्वगुणो हि दीप्तै
> कल्याणबुद्धिं कुरुते नराणाम् ॥ ५८ ॥

५८ भो इत्यादि। भो भो नराधीश्वर। 'मृशाभीक्ष्णे विच्छेदे प्राग्द्वि' रिति द्विरुक्तम्। साधु साधु–मञ्जुल मञ्जुल। त्वया मति–भवता बुद्धि, धर्मपथे–जीवदयाभिधानराजमानधर्ममार्ग, निबद्धा–लग्ना अभूत् । तथा हि–कालेन–काललब्ध्या, दीप्त–प्रज्वलित भव्यत्वगुण नराणा स्त्रीपुरुषाणां कल्याणबुद्धिं कुरुते। इयमिन्द्रवज्रा।

> धर्मामृतस्यन्दिनि सूक्तिसारे
> ततोऽवधान कुरु मामकीने।
> श्रद्धानवुद्ध्या हि निशम्यमानो[^1]
> निःशेषयत्येतदशेषदु रम्[^2] ॥ ५९ ॥

५९ धर्मेत्यादि। तत्–तस्मात् कारणात् । धर्मामृतस्यन्दिनि–धर्ममेवामृत, तत् स्यन्दितु प्रकाशितु शीलमस्यातीति धर्मामृतस्यन्दी। तस्मिन्। मामकीन –'युष्मदस्मदो षष्ठी बहुत्वे'। 'खिनञ् हितार्थ' इदमधिकारसूत्रम्। 'तवक ममकयोश्चे' ति खिनञ। ममकहित मामकीन, तस्मिन् मामकीने। सूक्तिसारे अवधान प्रयत्न कुरु। एष सूक्तिसार श्रद्धानवुद्ध्या निशम्यमान, चिदशेषदु ख निश्शेष यति–निश्शेष करोति। 'तत्करोति तदाचष्टे' इति ॥

> इद न साक्षात्कृतविश्वतत्त्वै–
> र्जिनेश्वरै केवलमभ्यधायि।
> तदा तदा दु खसहस्रदग्धै–
> रस्माभिरप्यन्वहमन्वभावि ॥ ६० ॥

६० इदमित्यादि। इद चरित साक्षात्कृतविश्वतत्त्वै–साक्षात् कृत प्रत्यक्षीकृत विश्व तत्त्व सकल विद्यमानवस्तुस्वरूप येषु तै, जिनेश्वरै–सामान्य

१ °भ्यत्व वदा M २ दीप्ति T ३ °बुद्धा P ४ °माने P, Ar
५ °दोषम् P

कर्माणि ये जितवन्तः तेऽपि जिनाः, तेषां ईश्वरैः अर्हद्भिः । केवलं नाभ्यधायि–नाभिहितं । 'भावकर्मणोश्चे'ति धातोरिञ्भवति । तदा तदा – तस्मिन् तस्मिन् काले, दुःखसहस्रदग्धैः अस्माभिरपि अन्वहम् अन्वभावि–अनुभूतं । इयमपि इन्द्रवज्रा ॥

तत इदं चरितामृतमावयोः
सकलदोषपरिक्षयकारणम् ।
तव नरेन्द्र वदामि सविस्तरं
समवधेहि सतां प्रतिभाषितम् ॥ ६१ ॥

६१. तत इत्यादि । आवयोः इदं चरितामृतं – 'चरितं चरणं चारः स्यात् शीलं व्रतरक्षणमि'ति विश्वः । आचारपीयूषं सकलदोषपरिक्षयकारणं–सकलश्चासौ दोषश्च, तस्य परिक्षयकारणं । भो नरेन्द्र–हे मारिदत्त । तत् सविस्तरं तव वदामि–भवतो निरूपयामि । यत् सतां सद्भिः प्रतिभाषितम् । 'मतिपूजार्थ-त्रिच्छीलादिभ्यः क्तः ' इति क्तप्रत्ययोगे षष्ठ्याः तृतीया । समवधेहि निश्चिनु । इदं वृत्तं द्रुतविलम्बितम् ॥

एतत्सारमुदारसौख्यसुभगस्थानोपपत्तिप्रदं
कल्याणं तदिहायबद्धमतयः संशृण्वते ये बुधाः ।
तेऽमी कुन्दशशाङ्कनिर्मलयशःश्रीदिग्धदिग्भित्तयः
श्रेयः शाश्वतमाप्नुवन्ति भुवने भुक्त्वो[1]रुभोगश्रियः ॥ ६२ ॥

इति श्रीवादिराजविरचिते[2] यशोधरचरिते[3] महाकाव्ये
प्रथमः सर्गः ।

६२. एतदित्यादि । एतत् सारं 'सारो ना सत्त्वभेदे स्यात् सारं क्लीबं बले सुखे ' इति विश्वप्रकाशः । उदारसौख्यसुभगस्थानोपपत्तिप्रदं–उदारं सौख्यं यत्र तत् उदारसौख्यं, सुभगस्थानं, तस्य उपपत्तिः–प्राप्तिः, तां यच्छतीति यतः । कल्याणं तत्–तस्मात् कारणात्, इहावबद्धमतयः ये बुधाः संशृण्वते–श्रवणं कुर्वन्ति । 'समो गम्यृच्छिप्रच्छिस्वरश्रुवेत्त्यर्तिदृशः' इत्यात्मनेपदम् । सकर्मकश्चेत् आत्मनेपदं न भवति । यदाह हर्षकविर्नैषधे—

प्रतिमासमसौ निशाकरः स्म संगच्छति यद्दिनाधिपम् [ नैषध. II. 58 ]

इति । कुन्दशशाङ्कनिर्मलयशः श्रीदिग्धदिग्भित्तयः । कुन्दं माघ्यं । 'माघ्यं

१ भुक्त्वोरु P, A. २ वादिराजसूरिविरचिते P. M ३ यशोधरमहाराज' P.

कुन्दमि'त्यमरः । कुन्दं च शशाङ्कश्च कुन्दशशाङ्कौ । तौ इव । निर्मलं यशः-कीर्तिः, तस्य, श्रीः तया दिग्धा-लेपिता दिग्भित्तिः यैः । तेऽमी मुक्तोरुभोगश्रियः भूत्वा, शाश्वतं श्रियो निर्वाणम् आप्नुवन्ति-गच्छन्तीति । इदं शार्दूलविक्रीडितम् ॥

इति श्रीवादिराजकृत-यशोधरनामधेय-महाकाव्य-टीकायां लक्ष्मण-( *V. L* लक्षण ) कृतायां प्रथमस्सर्गः ।

---

# द्वितीयः सर्गः ।

अस्त्यूर्जितावन्तिषु कान्तभोगैः
पुरी जगत्युज्जयिनी प्रसिद्धा ।
महोदयामाह्वयते समृद्ध्या
या राजधानीं शतयज्वनोऽपि ॥ १ ॥

नमामि नम्राखिलशिष्यनेत्र–
ताराभ्रमद्भृङ्गकलापकान्तम् ।
श्रीवादिराजस्य पदाम्बुजात
मनोजबाणव्रजभञ्जनस्य ॥

१. अस्तीत्यादि । जगति अवन्तिषु–अवन्तिदेशे । अवन्तिशब्दः पुल्लिग-बहुवचनमेव । यदाह मेघसंदेशे कालिदासः—

प्राप्यावन्तीनुदयनकथाकोविदग्रामवृद्धान्
पूर्वोद्दिष्टामनुसर पुरीं श्रीविशालाम् विशालामिति ॥ [ I 30 ]

कान्तभोगैरूर्जिता–श्रेष्ठा, प्रसिद्धा–प्रख्याता, उज्जयिनीपुरी अस्ति । या पुरी शतयज्वन.–शतमखस्य, महोदयां महाभ्युदयवर्तीं, राजधानीं–अमरावतीं, समृद्ध्या आह्वयते–स्पर्धयामास । 'ज: ' इत्यात्मनेपदम् । इयमिन्द्रमाला ॥

अनेक युद्धेष्ववलिप्तवैरि–
विध्वंसनाविष्कृतविक्रमश्रीः ।
बभूव तस्यां नयविन्नरेन्द्रो
यशोघ[1] इत्यूर्जितनामधेयः ॥ २ ॥

२. अनेकेत्यादि । अनेकयुद्धेषु अवलिप्तवैरिविध्वंसनाविष्कृतविक्रमश्रीः– अवलिप्ताः गर्विताः, अवलिप्ताश्च ते वैरिणश्च, तेषां विध्वसनं, तेनाविष्कृता विक्रमश्रीः यस्य स तथोक्तः । नयवित्–नीतिवित् । यशोघ इत्यूर्जितनामधेयः । तस्यां पुर्यां नरेन्द्रो बभूव ॥

---

१ यशौघ M.

स घंसते यत्कुमुदावदातं
यशो दिशां भित्तिषु बद्धलेपम्।
ततस्तमाहुः कवयो यशोघं
पृषोदराद्युक्तनिरुक्त्यभिज्ञाः[1] ॥ ३ ॥ *

३. स इत्यादि । सः राजा, स्वकीयं कुमुदावदातं-कैरवगौरं यशो दिशां भित्तिषु बद्धलेपम्, घंसते करोतीति यावत् । 'घसि करण' इति धातुः । ततः-तस्मात्, पृषोदराद्युक्तनिरुक्त्यभिज्ञाः-पृषोदरादयः शब्दाः न प्रकृतिप्रत्ययापेक्षावन्तः । तेषूक्तानां शब्दानां, निरुक्त्यभिज्ञाः-विग्रहवेदिनः कवयः, तं-राजानं यशोघमाहुः ॥

तस्यार्पिता प्रत्युरसं रहस्ये
चर्चेव नित्यं हरिचन्दनस्य।
प्रवृद्धरागा स्मरतापमुच्चै-
श्चन्द्रानना चन्द्रमती जहार ॥ ४ ॥

४. तस्येत्यादि । प्रत्युरसं अर्पिता प्रवृद्धरागा-प्रबलकुङ्कुमचन्द्रानना-§ कर्पूरमुख्या हरिचन्दनस्य चर्चेव-अनुलेपनमिव । 'स्नानं चर्चा तु चार्चिक्यं स्थासक' इत्यमरः। प्रवृद्धरागा-प्रवर्धमानानुरागा, चन्द्रानना-शशिमुखी, चन्द्रमतीति पत्नी । तस्य राज्ञः उच्चैः स्मरतापं-मन्मथतापं, नित्यं-अनवरतं, जहार-हरति स्म ॥

तयोरतुल्यो नयविक्रमाभ्या-
मासीत् सुपुत्रः स यशोधराख्यः।
अभ्युद्वहन् दिक्षु यशःप्रकाशं
क्षीरोदकल्लोलकलापशुभ्रम् ॥ ५ ॥

५. *तयोरित्यादि* । यः क्षीरोदकल्लोलकलापशुभ्रं-क्षीरोदस्य क्षीरसमुद्रस्य, क्षीरं उदकं यस्येति, 'पूर्वं एकहल्युदकस्योदः' इति उदकशब्दस्य उदादेशः । क्षीरोदस्य कल्लोलाः तरङ्गाः, तेषां कलापः समूहः । 'कलापो भूषणे बर्हे तूणीरे संहतेऽपि च' इत्यमरः । कलापवत् शुभ्रं यशःप्रकाशं, दिक्षु अभ्युद्वहन्-प्रसरन्, रराज नयविक्रमाभ्यां-नीतिपराक्रमाभ्यां, अतुल्योऽनुपमः सः । तयोः यशोघचन्द्र-

---

1 'युक्ति P. 2 'निरुक्तिविज्ञा. P. * P adds the following verse after this :—

तस्य स्फुरत्कान्तगुणस्य कान्ता नरेश्वरस्य जिनराजपुत्री (स्योर्जिनराजपुत्री ?)।
आत्मानुरूपान्यनमेव लक्ष्मीर्गुणान्विता चन्द्रमती बभूव ॥

§ चन्द्रानना – चन्दतीति चन्द्रः; स एव आननं मुखं यस्याः सा चन्द्रमती । – पदकुमुदचन्द्रिका ।

मत्योः सुपुत्रः आसीत् । 'अस्तेर्दिस्यो'रिति ( का. व्या. सू. III vi. 89 ) ईड् भवति । 'अस भुवि' इति धातोर्लङ् ॥

विमुच्य कान्ति शरदिन्दुबिम्बं
भृयः क्षयापत्तिभयातुरेव ।
तस्याक्षयश्रीनिलयस्य वक्त्रं
व्याकोशनेत्रोत्पलमध्युवास ॥ ६ ॥

६. विमुच्येत्यादि । कान्तिः शोभा, भूयः क्षयापत्तिभयातुरेव–क्षयव्याधितो जातापत्तिर्विपत् तस्याः जातं भयं तेन आतुरा इव । 'आतुरोऽभ्यमितोऽभ्यान्त' इत्यमरः । शरदिन्दुबिम्बं विमुच्य अक्षयश्रीनिलयस्य तस्य व्याकोशनेत्रोत्पलं वक्त्रमध्युवास–वक्त्रे तिष्ठति स्मेति यावत् । 'वसोऽनूपाध्याङः' ( शा व्या. सू. I iii 123 ) इत्यधिकरणम् ॥

उरस्तु विस्तीर्णमुदारधाम्न-
स्तस्योल्लसन्मौक्तिकहारयष्ट्या ।
श्रियस्तदन्तर्वसतेर्विरेजे
संभोगहासप्रभयेव बद्धम् ॥ ७ ॥

७ उर इत्यादि । उदारधाम्न.– महतेजसः तस्य विस्तीर्णमुरः–वक्षस्तु उल्लसन्मौक्तिकहारयष्ट्या रेजे। कथमिव ? तदन्तर्वसते·–तन्मध्यवासिन्याः श्रियः संभोगहासप्रभया बद्धमिव । अयमुत्प्रेक्षालङ्कारः । यदाह दण्डी–

"अन्यथैव स्थिता वृत्तिश्चेतनस्येतरस्य वा ।
अन्यथोत्प्रेक्ष्यते यत्र तामुत्प्रेक्षां विदुर्बुधाः ॥"

[ काव्यादर्श, II 219 Darbhanga Edn ]

इति ॥

घनौ भुजौ तस्य भुजङ्गदीर्घौ
देहाविव द्वौ रणविक्रमस्य ।
अरातिराजोर्जितमण्डलाना-
मकल्पिपातामिव राहुकेतू ॥ ८ ॥

८ घनावित्यादि । रणविक्रमस्य द्वौ देहाविव घनौ कठिनौ भुजङ्गदीर्घौ तस्य भुजौ अरातिराजोर्जितमण्डलानां राहुकेतू इव अकल्पिपातां-अभूताम् । उदितशीतभानु विलोक्य राहुकेतू भुजङ्गरूपिणाविति प्रसिद्धिः ॥

---

१ व्याकोचनीलो' T.

निस्त्रिंशनिर्दारितवैरिकुम्भी
समग्रसिंहः स पराक्रमेण ।
तन्वा तु सौन्दर्यनिवासभूम्या
जगाम कीर्तिं भुवि सिंहमध्यः ॥ ९ ॥

९ निस्त्रिंशेत्यादि । निस्त्रिंशनिर्दारितवैरिकुम्भी–निस्त्रिंशेन खड्गेन निर्दारिता हिंसिता वैरिणः शत्रव एव कुम्भिनः गजा यस्य स तथोक्तः । 'कुम्भी कुञ्जरवारणेभरदिनः सामोद्भवः सिन्धुरः' इति हलायुधः । पराक्रमेण समग्रसिंहः–सपूर्णसिंहः स राजा तु सौन्दर्यनिवासभूम्या तन्वा–शरीरेण भुवि सिंहमध्य इति कीर्तिं जगाम । सपूर्णसिंहस्य सिंहमध्यम इति विरोधः । परिहारस्तु सिंहावलग्न इति यावत् ।

तस्योत्तमाशेषगुणस्य कश्चि-
न्न मध्यमो नापि गुणो जघन्यः ।
तस्मिन्न भेजुस्तत एव तृप्तिं
ताभ्यां सकामा हि नितम्बवत्यः ॥ १० ॥

१० तस्येत्यादि । उत्तमाशेषगुणस्य कश्चित् मध्यमः गुणो न, कश्चित् जघन्यो गुणो न । तत एव तस्मिन् राज्ञि नितम्बवत्यः–वनिताः तृप्तिं सौहित्यं न भेजुः । 'सौहित्यं तर्पणं तृप्ति'रित्यमरः । अत्यन्तानुरक्ता बभूवुरिति भावः । तथा हि–यतो नितम्बवत्यः–कटीतटपरिकल्पिता कामना यस्य यूनः पुंसः । मध्यमगुणः–कृशोदरेतरत्वादि गुणो न विद्यते जघन्यो गुणः । 'पश्चान्नितम्बः स्त्रीकट्याः क्लीबे तु जघनं पुरः' इत्यमरः । जघने भवः जघन्यः गुणो न विद्यते । तस्मिन् यूनि तृप्तिं परितोषं । 'तृप्तिस्तर्पणतोषयोः' इति रभसः । कथं भेजुः ? केनापि प्रकारेण परितोषपरिकल्पिता न बभूवुः इति भावः । लोके नितम्बवत्यः युवतयः ताभ्यां मध्यमजघन्यगुणाभ्यां सकामा हीति विरोधः । परिहारस्तु मध्यमजघन्यगुणव्यतिरेकोत्तमगुणपरिकलितं पुमांसं विलोक्य विह्वलीभूतमानसाः नितम्बवत्यः तृप्तिं कथं भजन्तीति तात्पर्यम् ।

पादौ तदीयौ नवपद्मरागौ
क्रियाविधानादुपलब्धशोभौ ।
चित्रमद्भुतं यत्पृथिवीपतीनां
चूडामणित्वे गुणतोऽजितां ताम् ॥ ११ ॥

११ पादावित्यादि । नवपद्मरागौ आदित्यावलोकनेन सद्योविकसित कोकनदसमौ । क्रियाविधानात् स्नानादि क्रियाविधानात् उपलब्धशोभौ तदीयौ

१ 'निर्धारित' T, M २ 'गुण' P

पान्तौ। पृथिवीपतीनां चूडामणित्व—मस्तकालङ्काररत्वं गुणनोऽजिहाताम्—अगमता मिति यत्, तदद्भुतं किम्? नवपद्मरागो—नूतनपद्मरागरत्ने क्रियाविशेषणात्—निरूप विशेषणात् उपलब्धयशोभो—स्वीकृतभूरिकान्ती पृथिवीपतीनां चूडामणित्वं शिरोरत्नत्व गुणेन—स्वसामर्थ्यात् गच्छेते इत्यत्र किमद्भुतम्॥

देवी नु तस्यामृतमत्यभिख्या
सेन्दो रसादैरिव निर्मिताङ्गी।
तामेव कुर्वन्नलिकामजस्रं
तन्मानसास्वादमबोधि कामः॥ १२॥

१२ देवीत्यादि। तस्य देवी महिषी। अमृतमत्यभिख्या अभूत्। अमृतमतीति नामधेया आसीत्। अनाशयुक्ता कान्तिरभूत्। 'अभिख्या नामशोभयो' रित्यमरः। सा इन्द्रोः रसाद्यैः निर्मिताङ्गीव। कामो—मदनः तामेव नलिका—नाडिं कृत्वा तन्मानसास्वाद—तस्य यशोधरस्य मानसं हृदयं, तस्यास्वादं रुचिं अबोधि—अबोधिष्ट। 'देवजनबुधपूरिता इण्य इण्यो वा' इति इट् वा भवति॥

यशोमतिं नाम यशोघपौत्रं[1]
यशोऽमृताप्यायितविश्वलोकम्।
तया स पुत्र जनयाबभूव
पूतक्रतायेव जयन्तमिन्द्रः[2]॥ १३॥

१३ यशोमतिमित्यादि। स यशोधरः, तया अमृतमत्या देव्या, यशोघ पौत्रं यशोऽमृताप्यायितविश्वलोकं—यशोऽमृतेन आप्यायितं तृप्तीकृतं विश्वलोकं सकलजनं यस्य, तं यशोमतिं नाम प्रसिद्धं। 'नाम प्राकाश्यसंभाव्यक्रोधोपगमकुत्सने' इत्यमरः। पुत्रं—कुलपवित्रीकरणं, यदाह धनंजय कविकमलमार्तण्ड—
'पुन पुनाति हि कुलं निराहुः'
इति। जनयाबभूव, कथमिव? पूतक्रतायेवा—पूतक्रतौ पूता पवित्रा क्रतवो यज्ञाः पूजा यस्य तस्य इन्द्रस्य पत्नी पूतक्रतायी। तया पुलोमजया। 'यज्ञः सत्रोऽध्वरो यागः सप्ततन्तुर्मखः क्रतुः' इत्यमरः। 'पूतक्रत्वग्निवृषाकपिकुसितकुसिदानामैङ्' चेति ङी। इन्द्रो जयन्तमिव। 'जयन्तः पाकशासनि' रित्यमरः॥

तत्रात्मसंपद्गुणवत्युदारे
यूनि प्रयुज्याखिलराज्यभारम्[3]।
निराकुलस्वान्तनिसृष्टरागं
श्रियं यशोघश्चिरमन्वभुङ्क्त॥ १४॥

१४ तत्रेत्यादि। यशोघो राजा। आत्मसंपद्गुणवति—आत्मनः संपद्गुणोऽस्यास्तीति आत्मसंपद्गुणवान्। तस्मिन् उदारे—दातरि। 'उदारो दातृम

१ 'पुत्रो P २ पूतक्र P ३ प्रयोज्या' Ar

*हतो 'रित्यमर.* । *यूनि–यौवनवति तत्र यशोधरे, आखिलराज्यभार प्रयुज्य–निक्षिप्य निराकुलस्वान्तनिसृष्टरागः–निराकुलं च तत् स्वान्तं च । तस्मिन् निसृष्टः–* *विसृत , राग.–अनुरागः, भूत्वा श्रियं चिरं अन्वभुड्क्त अनुभुक्तवान् ॥*

अथैकदास्थानगतस्तु राजा
निषेव्यमाणो नरलोकनाथै. ।
आदर्शदृष्ट्या पलितानि दृष्ट्वा
जघान तृष्णां विषयेषु भव्यः ॥ १५ ॥

१५ अथेत्यादि । एकदा–एकस्मिन् दिवसे, आस्थानगतो नरलोकनाथैः निषेव्यमाण भव्यः राजा । आदर्शदृष्ट्या–दर्पणविलोकनेन, 'दृष्टिर्ज्ञानेऽक्ष्णि दर्शने ' इत्यमर । पलितानि जरस. । ' पलित जरसा शौक्ल्यमि'त्यमरः । दृष्ट्वा विषयेषु स्रक्चन्दनवनितादिषु तृष्णा काङ्क्षा जघान परिहृतवान् ॥

राज्यं पृथिव्या प्रतिपाद्य सद्यो
यशोधरायोर्जितविक्रमाय ।
विरक्तिभाजां तु शतेन राज्ञां
तपोवनं भूमिपतिर्जगाम ॥ १६ ॥ [१]

१६ राज्यमित्यादि । भूमिपति. यशोघः पृथिव्या राज्य राजत्वं ' यण् च प्रकीर्तित ' ( का. व्या. सू.–तद्धितपाद, ३०१ ) इति भावे यण् । पालनत्वमिति यावत् । ऊर्जितविक्रमाय–अतिशयोर्जस्वलपराक्रमाय । ' ऊर्जस्वलः स्यादूर्जस्वी य ऊर्जोऽतिशयान्वित. ' इत्यमरः । यशोधराय प्रतिपाद्य–दत्त्वा विरक्तिभाजां वैराग्यभाजां राज्ञां शतेन सह तपोवन जगाम ॥

तस्मिन् नये भर्तरि सानुरागा
सा स्त्रीस्वभावादिव राज्यलक्ष्मीः ।
अनारतं तत्कृतयेव[१] भुक्त्या[२]
सुव्यक्तमङ्गेषु बभूव पुष्टा ॥ १७ ॥

१७ तस्मिन्नित्यादि । स्त्रीस्वभावात् तस्मिन् नवे भर्तरि सानुरागा–अनुरागेण सहिता, सा राज्यलक्ष्मीः अनारत तत्कृतया–तेन रचितया भुक्त्या पालनेन *अनारतेण स्वाङ्गेषु–' स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानि च राज्याङ्गानी ' त्यमरः ।* अङ्गेषु अवयवेषु, ' अङ्ग प्रतीकोऽवयवोऽपघन ' इत्यमरः । सुव्यक्तं पुष्टा बभूव ॥

[१] Ar omits verses 17 and 18, and yet numbers 20 as 20.
[१] तत्कृतयेव M [२] भक्त्या P, T.

गुणामृतैस्तस्य निषिच्यमाना
पत्युर्वियोगेन विमुच्य तापम् ।
ससञ्ज तस्मिन् प्रकृतिः समस्ता
सौरीव नीहारकरे मरीचिः ॥ १८ ॥

१८. गुणेत्यादि । तस्य यशोधरस्य; गुणामृतैः निषिच्यमाना समस्ता प्रकृतिः–सकलपरिवारः, पत्युः–यशोधरस्य, वियोगेन जातं तापं विमुच्य तस्मिन् यशोधरे, ससञ्ज लग्ना अभूत् । सुधापरिषेचनं तापपरिहरणं करोति । कथमिव ? सौरी–सूर्यस्य सम्बन्धिनी मरीचिः–दीधितिः नीहारकरे चन्द्रमसीव । श्रूयते हि भानुर्वरुणाशासङ्गमे स्वमयूखसंततिं अग्नौ चन्द्रमसि च निक्षिपतीति प्रसिद्धिः ॥

क्रोधावहं तच्चरितं न पुंसा-
मुद्वेजनोऽसौ न विविच्यकारी ।
न चावमन्ता[1] विनयोत्तरश्री-
र्दाता स लोभं[2] न सहिष्णुरासीत् ॥ १९ ॥

१९. क्रोधेत्यादि । तच्चरितं पुंसां क्रोधावहं नासीत् विविच्यकारी अतः नोद्वेजनः–विनयोत्तरश्रीरसौ अवमन्ता–अवज्ञातः नासीत् । दाता–वितरणनिपुणः स राजा लोभं सहिष्णुः नासीत् ।

तेजोमयं तस्य नृपस्य चक्षु-
र्निमील्य तन्मुख्यमवाप[3] निद्राम् ।
अन्येन सर्वाङ्गभुवा तु जाग्रत्
स तस्कराणामहरत् प्रवृत्तिम् ॥ २० ॥

२०. तेज इत्यादि । मुखे भवं मुख्यं । तस्य नृपतेः तेजोमयं तेजोरूपं चक्षुः–नयनं निमील्य–पिधाय, निद्रां अवाप । सर्वाङ्गभुवा–सप्ताङ्गभुवा सर्वावयवसंवासयुतेन अन्येन तेजोरूपेण चक्षुषा–ज्ञानलोचनेन, जाग्रत्–जागरवान् स राजा तस्कराणां प्रवृत्तिं अहरत्–हृतवान् । तज्जागरणस्वरूपं कथं ? 'स्वपरमण्डलकार्याकार्यावलोकने चाराः चक्षूंषि क्षितिपतीनां' इति यदाह सोमदेवाचार्यः ।

---

१ °मन्तो P. २ लोभी P. ३ °मवाप्य T.

मन्त्रक्रियाभ्यामसियष्टिवेद्यां[1]
स्वतेजसाभिज्वलितेन राजा।
निरास्थदुद्यद्रिपुकेतुदौःस्थ्यं
समग्रसिद्ध्यै निजमण्डलस्य ॥ २१ ॥

२१. मन्त्रेत्यादि। असियष्टिवेद्यां–खड्गवितर्दौ मन्त्रक्रियाभ्यां मन्त्रालोचनतत्क्रियाभ्यां अभिज्वलितेन तेजसा, निजमण्डलस्य–स्वकीयदेशस्य सिद्ध्यै–निष्पत्तिनिमित्तं स राजा उद्यद्रिपुकेतुदौस्थ्यं उद्यन्नुासौ रिपुश्च, स एव केतुः, तस्माज्जातं दौस्थ्यं दुस्थितिं निरास्थत्–परिहृतवान्। 'अणसु–वचि–ख्याति–लिपि–सिचि–ह्व' (का. व्या. सू. आख्यात प्रकरण, II. 62) इत्ययतन्यां लुङि इण् भवति। 'अस्यतेः स्थोऽन्तः' (का. व्या. सू. II, 95) इति थागमः। 'असु क्षेपणे' इति धातौ लुङ्परस्मैपदप्रथमपुरुषैकवचनम्। कश्चित् मन्त्रवेद्यां मन्त्रयुगाज्यसमिद्भ्यां अभिज्ज्वलितेन जातवेदसा उदितकेतुदौस्थित्यनिराकरणं यथा करोतीति भावः ॥

दिनावसाने स[2] विसृज्य लोकं
प्रासादमारुह्य सरत्नभित्तिम्।
कदाचिदास्थित् मनोजतृप्त्यै
सप्रेयसीगर्भगृहे सहेलम् ॥ २२ ॥

२२. दिनेत्यादि। सभागतः स राजा दिनावसाने लोकं सेवागतं जनं, 'लोकस्तु भुवने जने' इत्यमरः। विसृज्य–त्यक्त्वा। सरत्नभित्तिं प्रासादं आरुह्य, कदाचित् मनोजतृप्त्यै सप्रेयसीगर्भगृहे–अमृतमतीसहितमनोजलीलागारे 'न्यग्रोध्यतोऽनशीयोबहुव्रीहेर्हृस्वः' (शा. व्या. सू. II. 1. 123) इति प्रेयसीशब्दस्य ईकारालोपः। सहेलं आसिष्ट–सक्रीडं अतिष्ठिपत्।

वहन् बहिश्चारुगवाक्षरन्ध्रै–
रामोदितान्तर्भवनस्तदानीम्।
कपोतपक्षच्छविरुज्जजृम्भे
निर्हारिकालागरु[3]पिण्डधूमः ॥ २३ ॥

२३. वहन्नित्यादि। तदानीं आमोदितान्तर्भवनः चारुगवाक्षरन्ध्रैः बहिर्वहन् कपोतपक्षच्छविः निर्हारिकालागरुपिण्डधूमः–अत्यन्तमनोहरपरिमलकृष्णागरोः पुञ्जधूमः 'आमोदः सोऽतिनिर्हारी' इत्यमरः।

---

१ °विद्यां P.    २ स्व P.    ३ °कालागुरु T.

आताम्रकम्रद्युतिरत्नदीपै-
स्तस्मिन् जना पाटलवर्णभाजाम्।
व्याकोशमल्लीकुसुमानि दाम्ना-
मवागमस्तत्नवसौरभेण ॥ २४ ॥

२४ आताम्रेत्यादि। तस्मिन् वासगृहे। जना –परिचारकजना. आताम्रकम्रद्युतिरत्नदीपै –आ समतात् ताम्र, वत्रयोरभेद, रक्तवर्णा, कम्रा मनोहरा द्युतयो येषु तानि रत्नानि एव दीपा, तै पाटलवर्णभाजा, दाम्ना–माल्याना 'न पुसि दाम माल्य स्त्री स्रङमाला परिकथ्यते' इति विश्वप्रकाश। कुसुमानि तन्नवसौरभेण–नेषा नूतनपरिमलेन अवागमन्–ज्ञातवन्त ॥

आवर्तमान परिमन्दवृत्त्या
वातायनद्वारि चिर विरेजे।
कर्पूरधूलीसुरभिर्नभस्वान्
श्वासायितस्तद्गृहदेवताया ॥ २५ ॥

२५ आवर्तेत्यादि। वातायनद्वारि परिमन्दवृत्त्या चिरमावर्तमान तद्गृह देवतायाः श्वासायित –श्वासवदाचरितो नभस्वान् वायु। कर्पूरधूलीसुरभि –घनसाररजसा सुरभि विरेजे–रराज ॥

आमेचके मञ्चकरत्नदीप्त्या
शुक्लोत्तरच्छदहसतूले।
स चन्दनस्थासकबन्धुराङ्गो
देवीमुदार रमयाम्बभूव ॥ २६ ॥

२६ आमचक इत्यादि। मञ्चकरत्नदीप्त्या–पर्यङ्कपादशिरस्न्यस्तहरिन्मणिप्रभया, आमेचके–समन्तान्नीलवर्णे। शुक्लोत्तरच्छदहसतूले–अधिकशुभ्रोत्तरीयहसतूलतल्पे, चन्दनस्थासकबन्धुराङ्ग –श्रीगन्धानुलेपनबन्धुरशिशिर (शरीर ?) स राजा, देवीं–अमृतमतीं, उदार–अधिक, 'उदारो दातृमहतो' इत्यमर। रमयांबभूव–क्रीडितवान् ॥

क्षण स तस्या वदनारविन्दे
जग्राह लीला भ्रमरस्य कामी।
क्षण तु पीनस्तनयोर्निकाम
जहार चर्चा हरिचन्दनस्य ॥ २७ ॥

२७ क्षणमित्यादि। कामी–स राजा, तस्या –अमृतमत्या, वदनारविन्दे–मुखकमले, भ्रमरस्य लीलां, जग्राह–स्वीकृतवान्। अलि. नलिनपराग स्वीकरोतीति

१ धाम्ना T २ पथि M ३ °मुदारां T P, Ar ४ तन्वी P

भावः । स एव तस्याः पीनस्तनयोः पीवरपयोधरयोः हरिचन्दनस्य वज्रवदर्पितगन्धस्य 'चन्द्रे सूर्ये यमे वायौ वासवे दर्दुरे हये पर्णौ मृगाङ्के प्लवगे हरिशब्दः प्रकीर्तितः' इति विश्वः। 'गन्धसारो मलयजो भद्रश्रीश्चन्दनोऽस्त्रियां' इत्यमरः। चर्चा-अनुलेपनं, जहार-परिहृतवान् । निबिडालिङ्गनसञ्जातस्वेदोदकभरेणानुलेपनस्रावो भवतीति भावः ॥

क्षणं तया नूतनरत्नभाजा
भुजेन कण्ठे परिरभ्यमाणः ।
कृताभ्रमुस्पर्श इवेन्द्रदन्ती
भेजे स भावं भृशमुन्मदिष्णुः ॥ २८॥

२८. क्षणमित्यादि । तया-अमृतमत्या, नूतनरत्नभाजा-नूतनानि च तानि रत्नानि च तानि भजति इति नूतनरत्नभाजा भुजेन, कण्ठे परिरभ्यमाणः, उन्मदिष्णुः-मत्तः स राजा, 'उन्मदिष्णुश्चोन्मदितः' इत्यमरः। भृशं-अत्यर्थं, भावं भेजे-चेष्टां स्वीकृतवान् । 'भावः सत्तास्वभावाभिप्रायचेष्टात्मजन्मसु' इत्यमरः। कथमिव ? कृताभ्रमुस्पर्शः-कृताभ्रमोः स्पर्शः कृतस्वकीयकान्तायाः करेणोः स्पर्शनः । इन्द्रदन्तीव ऐरावत इव ॥

क्षणं जिघृक्षुर्जघने[1] निधानं
नीवीधरान्तर्गतमुत्पलाक्ष्याः ।
उत्सारयामास कृतोपजापः
तद्वेष्टयन्तं रशनाभुजङ्गम् ॥ २९ ॥

२९. क्षणमित्यादि । उत्पलाक्ष्याः-अमृतमत्याः, नीवीधरान्तर्गतं नीव्येव-वस्त्राग्रभङ्गुरग्रंथिरेव, 'परिधानाग्रकग्रंथिः प्रोक्ता नीवी तयोरुचयः' इति हलायुधः । धरा-भूमिः, तस्यान्तर्गतं-मध्यमुपगतं, जघने-मदनसदने निधानं-निक्षेपं क्षणं जिघृक्षुः-ग्रहीतुमिच्छुः, कृतोपजापः-'भेदोपजापावुपधे' त्यमरः । तद्वेष्टयन्तं तन्निधानमावेष्टयन्तं, रशनाभुजङ्गं-'मेखला रशना काञ्ची हेमपर्यायमूनकं' इति धनंजयः । रशनैव भुजङ्गः सर्पः, तं उत्सारयामास-स्वीकरोति स्म । कश्चिन्मन्त्रवादी निधानं निक्षिप्तं जिघृक्षुः सन्, कृतोपजापः-जप एव जापः, स्वार्थेऽण् । 'स्वाध्यायः स्याज्जप' इत्यमरः । तद्वेष्टयन्तं भुजङ्गं-कुटिलं गच्छतीति भुजङ्गः, तं गर्वं पलायनभाजं करोति यथा तद्वदिति भावः ॥

---

[1] जघने ।

आलिङ्गनं गाढमपास्य तस्मिन्
दत्तेक्षणे[1] कामिनि नाभिमूले ।
फूत्कारदुर्वारमणिप्रदीपे-
ष्वतीव सुभ्रूरकृताभ्यसूयाम् ॥ ३० ॥

३०. आलिङ्गनमित्यादि । तस्मिन् राज्ञि गाढमालिङ्गनमपास्य, नाभि-मूले-मदनमन्दिरे दत्तेक्षणे सति, सुभ्रूः-शोभने भ्रुवौ यस्याः सा । अमृतमती फूत्कारदुर्वारमणिप्रदीपेषु निजवदनविनिर्गतभस्त्रता निवारितुमशक्यरत्नदीपेषु असूयां अकृत-' अक्षान्तिरीर्ष्यासूया तु दोषारोपो गुणेष्वपि ' इत्यमरः । ईर्ष्याम-करोत् ॥

निपीड्य दन्तच्छदमुद्वसन्तं[2]
सा वेदनासीत्कृतगर्भकण्ठी ।
कचावकृष्टेन तु मल्लिकानां
दाम्ना दृशा कोपकरी जघान ॥ ३१ ॥

३१. निपीड्येत्यादि । दन्तच्छदमधरं । दन्तान् छादयति आवृणोतीति दन्तच्छदः, तं निपीड्य-बाधयित्वा, उद्वसन्तं तत्र स्थितं अमृतरूपरसं पिबन्तं यशोधरं वेदनासीत्कृतगर्भकण्ठी-वेदनया संभूतं सीत्कृतं-मणितं, कण्ठगर्भे-गलमध्ये यस्याः सा । ' सीत्कृतं मणितं कामे ' इति धनंजयः । कोपकरी सा, कचावकृष्टेन- कबरीकृष्टेन, ' कबरीकेशयोः कचः ' इति भागुरिः । कबरीनिर्मुक्तेन, मल्लिकानां दाम्ना-मालया, दृशा च-नेत्रेण, जघान-ताडयामास ॥

रतिक्रियायां विपरीतवृत्ते-
स्तस्याः स्तनाभ्यामवमुच्यमानम् ।
प्रियस्य तस्योरसि घर्मतोयं
कामानलाज्याहुतिवत्पपात ॥ ३२ ॥

३२. रतीत्यादि । रतिक्रियायां निधुवने विपरीतवृत्तेः पुम्भावमाचरन्त्याः तस्याः स्तनाभ्यामवमुच्यमानं घर्मतोयं-स्वेदोदकं तस्य प्रियस्य उरसि, कामान-लाज्याहुतिवत्-काम एवानलः, तस्य आज्याहुतिरिव, पपात ॥

---

१ दन्तेक्षणे P.  २ °मुद्वसन्तं T, P.  ३ °वाहुति P.

तती रजन्यां परिणामवत्यां
रतोत्सवारम्भपरिश्रमेण ।
आश्लिष्य कान्तां श्लथबाहुबन्धं[1]
निद्रासुखं भूमिपतिः प्रपेदे ॥ ३३ ॥

३३. तत इत्यादि । ततोऽनन्तरं, भूमिपतिः, परिणामवत्यां-परितोषवत्यां रजन्यां, रतोत्सवारम्भपरिश्रमेण-रतस्य उत्सवः, तस्य आरम्भः-प्रक्रमः, तस्मिन् परिश्रमः, तेन कान्तामाश्लिष्य श्लथबाहुबन्धं यथा भवति तथा निद्रासुखं प्रपेदे ।

अत्रान्तरे दन्तिनि राजवाह्ये
तद्वासगेहं समयावबद्धे ।
तत्र स्थितो हस्तिपकस्तु जाग्रद्
बबन्ध गीतं गमकाभिरम्यम् ॥ ३४ ॥

३४. अत्रेत्यादि । अत्रान्तरे-अस्मिन्नवसरे, राजवाह्ये-भूपालारोहणयोग्ये, दन्तिनि-स्तम्बेरमे, तद्वासगेहं-तस्य यशोधरस्य वासगेहस्य समया-समीपे । 'समयान्तिकमध्ययो'रित्यमरः । 'समीपे समयाव्ययमि'ति भागुरिः । 'हा धिक्-समयानिकषोपर्युपर्यध्यवोऽधोऽत्यन्तरान्तरेण तस्पर्यभिसर्वोभयैश्चाप्रधानेऽमोद्दशम्' (शा. व्या. सू. I. iii 100) इति समयशब्दयोगेन षष्ठ्यर्थे द्वितीया विभक्तिर्भवति । अवबद्धे सति, तत्र गजशालायां जाग्रत्-जागरूकः, हस्तिपकः-आधोरणः 'आधोरणा हस्तिपका' इत्यमरः । गमकाभिरम्यं-प्रयोगगम्यं, गीतं बबन्ध-रचितवानिति यावत् ॥

तन्मूर्छनाभिः स्फुटमभ्युदीर्णं
तत्प्रौढमाभोगवता स्वरेण ।
तत्सुप्रयोगान्मधुरावदातं
तद्वद्बन्धुरं मालवपञ्चमेन ॥ ३५ ॥

३५. तदित्यादि । तद्गीतं मूर्छनाभिः स्फुटमभ्युदीर्णं-'क्रमयुक्ताः स्वराः सप्त मूर्छनाः परिकीर्तिताः' इति विश्वप्रकाशः । सप्त स्वरैः स्फुटं-उल्बणं, अभ्युदीर्णं-उदीरितं, तत-गीतं, आभोगवता-परिपूर्णतायुक्तेन । 'आभोगः परिपूर्णता' इत्यमरः । स्वरेण-निषादर्षभगान्धारषड्जमध्यमधैवताः स्वराः । पञ्चमेन स्वरेण प्रौढं तद्गीत । सुप्रयोगात्-शोभनोपायात्, 'योगः संनहनोपायध्यानसङ्गतियुक्तिषि'-त्यमरः । मधुरावदातम्-प्रियश्चासौ निर्मलं । 'स्वादुप्रियौ तु मधुरौ' इत्यमरः । तद्गीतं मालवपञ्चमेन-मालवपञ्चमेति रागेण, बन्धुरं-मनोहरम् ॥

---

[1] °बन्ध M, P, Br. [2] °मावबद्धे T.

निमीलयन्ती नयनोत्पले सा
देवी परिम्लानतनू रतान्ते ।
आकर्णयामास सुखावह तत्
चकार तृष्णामपि रक्तकण्ठे[1] ॥ ३६ ॥

३६ निमीलयन्तीत्यादि । नयनोत्पले निमीलयन्ती । रतान्ते परिम्लान तनु सा देवी, सुखावह तद्गीत आकर्णयामास । रक्तकण्ठे सुललितरागरञ्जितगल, हस्तिपकेऽपि तृष्णा वाञ्छां चकार ॥

तत प्रभाते तद्भीकचित्ता
दूतीमुपस्थापयति स्म तस्मिन् ।
सा तं निरीक्ष्येव निवर्तमाना
निनिन्द राज्ञीं गुणवत्यभिरया ॥ ३७ ॥

३७ तत इत्यादि । ततोऽनतर, तस्मिन् प्रभात तद्भीकचित्ता–तदभिलषितचित्ता सती, 'कम्र कामयिताभीक कमन कामनोऽभिक' इत्यमर । दूतीमुपस्थापयति स्म–त निरीक्ष्येव निवर्तमाना गुणवत्यभिरया सा दूती राज्ञीं निनिन्द ॥

अहो विचित्र मकरध्वजस्य
विडम्बन स्तम्भितवस्तुबुद्धे[2] ।
देवी तु[3] मर्त्याकृतिरुर्वशी सा
यदीदृशं कामयते निकृष्टम् ॥ ३८ ॥

३८ अहो इत्यादि । यद यस्मात् कारणात्, मर्त्याकृति –मनुष्याकृति उर्वशी–देववनिता, ईदृश निकृष्ट–नीच, कामयते तत्–तस्मात् कारणात्, स्तम्भित-वस्तुबुद्धे –निराकृतवस्तुतत्त्वबुद्धे , मकरध्वजस्य विडम्बनमहो ।

आस्यादिक दुःसहपूतिगन्धि
निसर्गतोऽङ्ग परिभुग्नपृष्ठम् ।
सदिग्धमक्षिभ्रुवमस्य नास्ति
ग्रीवा शिरस्यास्तु[4] विलूनशीर्णा ॥ ३९ ॥

३९ आस्येत्यादि । अस्य हस्तिपकस्य आस्यादिक दुस्सह पूतिगन्धि, अङ्ग निसर्गत परिभुग्नपृष्ठ, अक्षिभ्रुव सदिग्ध, भ्रुवमिति कथमकारान्तत्व ? 'धेन्वनडु हर्यजुषाहोरात्रनक्तदिवारात्रिंदिवाहर्दिवोर्वष्ठीवपदष्ठीवाक्षिभ्रुवदारगवम्' इति ( शा

1 रक्तकण्ठी M 2 बु P 3 °मम Ar 4 शिरस्याश P

व्या. सू. II. i. 160 ) निपातनात् नपुंसकम् । ग्रीवा–कण्ठः, कुब्जशरीरत्वान्नास्ति । शिरस्याः–शिरसि भवाः, केशास्तु विलूनशीर्णाः ॥

आस्यं पुनर्वायसतुण्डकृष्णं
दन्ताश्च केचिद्वहिरन्तरन्ये ।
करावजस्रं करिमूत्रदग्धौ[1]
दग्धव्रणक्लेदयुतस्तु कुक्षिः ॥ ४० ॥

४०. आस्यमित्यादि । पुनरास्यं वायसतुण्डकृष्णं–काकवदनवत् मलीमसम् । 'वक्त्रास्ये वदनं तुण्डमाननं लपनं मुख' मित्यमरः । केचिद्दन्ताः नहि प्रवर्तन्ते । अन्ये दन्ताश्च अन्तर्वर्तन्ते । करौ अजस्रं करिमूत्रदग्धौ । कुक्षिस्तु दग्धव्रणक्लेदयुतः ॥

असौ कथं नाम नरेन्द्रपत्न्यै
रोचेत रुच्याकृतिमुद्वहन्त्यै ।
यद्वा किमेवं परिचिन्तया मे
स्त्रीणामपात्रेऽभिरतिः स्वभावः ॥ ४१ ॥

४१. असावित्यादि । असौ–हस्तिपकः, रुच्याकृतिमुद्वहन्त्यै नरेन्द्रपत्न्यै कथं रोचेत 'यस्मै दीप्सा रोचते धारयते वा तत्संप्रदानम्' नाम । कष्टम् । 'नाम प्राकाश्यसंभाव्यक्रोधोपगमकुत्सने' इत्यमरः । मम एवं चिन्तया किं ? यद्वा तथाहि–स्त्रीणामपात्रेऽभिरतिः स्वभावः–निसर्गः ॥

हा तत्[2] स्वचेतोगतमेव दूती
न्यवेदयत्तामुपसृत्य तन्वीम् ।
सा तां प्रति प्रत्यवदन्नतभ्रू–
र्मुखेन कामातुरगद्गदेन[3] ॥ ४२ ॥

४२. हेत्यादि । हा–कष्टं । 'हाहहेत्यद्भुते खेदे' इत्यमरः । दूती–गुणवती । तन्वीम्–कृशाङ्गीं । तां–अमृतमतीं । उपसृत्य स्वचेतोगतं तत्सर्वं निरूपं, न्यवेदयत्–सूचयति स्म । नतभ्रूः–नते भ्रुवौ यस्याः सा, तथोक्ता सा अमृतमती । तां गुणवतीं प्रति कामातुरगद्गदेन–मन्मथबाणजनितभ्रान्तिस्खलितवचनकलितेन मुखेन । अवदत्–अब्रवीत् ॥

---

१ °दिग्धौ T. २ हि T. ३ एतन P, M, B, D, E, T, Ar.

वया नव रूपमतीव रम्य
कुलोन्नतिश्चेति कुबुद्धिरेषा ।
यत्र[1] प्रसन्नो भगवान् मनोभू
स एव देव सखि सुन्दरीणाम् ॥ ४३ ॥

४३ वय इत्यादि । नव वय –नूतन तारुण्य । अतीव रम्य रूप कुलोन्नतिं श्चेति एषा कुबुद्धि । यत्र-यस्मिन् पुंसि । भगवान् ज्ञानी वीर्यवान् वा । 'भग श्रीकाममाहात्म्यवीर्ययत्न' इत्यमर । मनोभू । प्रसन्नोऽभूत, भो सखि, स एव सुन्दरीणा, देव –कान्त ॥

सतोऽपि रूपातिशयस्य साध्य
नितम्बिनीमानसरत्नलाभ ।
तस्यास्ति तच्चेत्किमतो विचारा–
त्कार्ये [2] सिद्धे न हि कारणेच्छा ॥ ४४ ॥

४४ सत इत्यादि । सत –विद्यमानस्य रूपातिशयस्य हि नितम्बिनी-मानसरत्नलाभ तत् साध्यम् । तस्य चास्ति चेत्, अतो विचारात् किम् । तथाहि–कार्ये सिद्धे सति कारणेच्छा न ॥

तस्मादसौ मा प्रति कामदेव–
स्तद्गीतनालीहृतचित्तवृत्तिम् ।
किं वा वयस्ये बहुनोदितेन
न तेन जीवामि विनाकृताहम् ॥ ४५ ॥

४५ तस्मादित्यादि । तस्मात्कारणात् असौ तद्गीतनालीहृतचित्तवृत्ति–तस्य गीतमव नालिका, तया हृता चित्तवृत्तिर्यस्या सा । तथोक्ताया मा प्रति कामदेव । भो वयस्ये, दूति । 'वयस्याली सहचरी'ति धनञ्जय । बहुनोदितेन किं वा–प्रचुर वचनकलापेनालम् । तेन विना हस्तिपक हित्वा । 'विनमास्तिस्र' ( शा व्या सू I ııı 193 ) इति विनायोगे द्वितीया-तृतीया पञ्चमी विभक्तिर्भवति । कृता–पापस-मता । 'कृत पापोपकलिते युगपर्याप्तयो कृतमि'ति विश्वप्रकाश । पापकलिताह न जीवामि । किंच विनाकृतेत्येक पद, यदाह वीरणन्दिस्वामी चन्द्रप्रभकाव्ये —

" तदह क्वचन प्रयत्नसाध्ये
विषयेऽल मनसि त्वया निधेय ।
न सहायविनाकृता कदाचित्
पुरुषस्योद्यमशालिनोऽपि सिद्धि ॥"

[ VI 31 N S Edn (2nd) ]

इति ॥

---

१ यस्य P २ कार्ये न सिद्ध सति P ३ °नाडी P Ar

इत्थं तया दर्शितरागवृत्त्या
देव्या सनिर्बन्धमुदीर्यमाणा।
आगत्य सा सत्वरमष्टवङ्कं[1]
दूती ततस्तत्प्रियमन्वातिष्ठत्॥ ४६॥

४६. इत्थमित्यादि। दर्शितरागवृत्त्या–संदर्शितानुरागवर्तनया देव्या सनिर्बन्धं–निर्बन्धसहितं यथा भवति तथा उदीर्यमाणा–उच्चार्यमाणा सा दूती सत्वरं अष्टवंकमागत्य, तत्–तस्मादष्टवंकात् तत्प्रियं–तस्याः प्रियं–अनुरागं, अन्वतिष्ठत्–अकरोत्। यदाह कुमारसम्भवे कालिदासः—

" प्रजापतिः कल्पितयज्ञभागः
शैलाधिपत्यं स्वयमन्वतिष्ठत् " इति॥ [ I. 17 ]

रात्रिंदिवं तेन यथावकाशं
सुखानि तस्याः किल निर्विशन्त्याः[2]।
दिनक्रमेणापचयं जगाहे
यशोधरे राजनि रागबुद्धिः॥ ४७॥

४७. रात्रिमित्यादि। यथावकाशं–अवकाशं अनतिक्रम्य, तेन हस्तिपकेन सह, रात्रिंदिवं–रात्रौ वा, दिवा–दिवसे वा 'धेन्वनडुह...मिति ( शा. व्या. सू. II. i. 160 ) निपातनात् रात्रिंदिवशब्दनिष्पत्तिः। सुखानि–सुरतजनितशर्माणि, निर्विशन्त्या–अनुभवन्त्याः तस्याः, यशोधरे राजनि रागबुद्धिः दिनक्रमेण, अपचयं–क्षयं, जगाहे–जगाम किल। 'वार्तासंभाव्ययोः किल' इत्यमरः॥

आलोकनालिङ्गनचुम्बनादौ
तस्याः स्थितिं तामनवेक्षमाणः।
बुद्ध्येव पूर्वं परिशोधनार्थं
सज्जोऽभवच्चन्द्रमतीतनूजः॥ ४८॥

४८. आलोकनेत्यादि। तस्याः आलोकनालिङ्गनचुम्बनादौ स्थितिं तामनवेक्षमाणः, चन्द्रमतीतनूजः यशोधरस्तु, पूर्वं–पूर्वस्मिन् बुद्ध्यैव परिशोधनार्थं विचाराय सज्जोऽभवत्–सन्नद्धोऽभूत्। 'सन्नद्धो वर्मितः सज्जः' इत्यमरः॥

---

१ °ष्टवङ्कं T. २ निर्विशन्त्याः T.

आस्थाननिर्वासितसर्वलोकः
स सज्जितं[1] वासगृहं प्रविश्य ।
सव्याजनिद्रो निशि दिव्यशय्यां
तयैव देव्या सममध्यशेत ॥ ४९ ॥

४९. आस्थानेत्यादि । आस्थाननिर्वासितसर्वलोकः–आस्थाने सभायां, निर्वासितः–विसर्जितः, सर्वलोकः–सकलपरिवारजनः स यशोधरः, सज्जितं–सज्जीकृतं वासगृहं–परिकरपरिकलितं शयनसद्मं, निशि–निशायां 'पद्नोमास्-हृन्निशसन्यूषन्दोषन्यकन्शकन्नुदन्नासंश्चासुटि' ( शा. व्या. सू. I ii. 143 ) इति सूत्रात् निशाशब्दस्य निश् इत्यादेशो वा । द्वितीयाबहुवचनादौ परतः । निशा, निशे, निशाः, हे निशे, हे निशे, हे निशाः; निशां, निशे, निशः; निशा निभ्यां निभ्यः इत्यादिरूपं नेयम् । प्रविश्य सव्याजनिद्रः–सकपटस्वपनो भूत्वा, तया–देव्या, समं–साकं, 'सत्रा समं सह' इत्यमरः । दिव्यशय्यां हंसतूलतल्पे, अध्यशेत–निद्रामुद्रितलोचनोऽभूत् । 'शीङ्स्थासोऽधेराधारः' ( शा. व्या. सू. I. iii 123 ) इत्यधिकरणम् ॥

निद्रायतस्तस्य भुजोपगूढा–
माकृष्य देवी निजदेहयष्टिम् ।
गृहीतताम्बूलसुगन्धमाल्या
जगाम तस्योपपतेः समीपम् ॥ ५० ॥

५०. निद्रेत्यादि । देवी निद्रायतः–निद्रां कुर्वतस्तस्य 'कर्तुराचिस्सलोपश्चेति' ( का. व्या. सू., आख्यात प्रकरण, II 43 ) सूत्रेण आचारार्थे कर्तुराचिर्भवति । यशोधरस्य भुजोपगूढां–बाहुना आलिङ्गितां, निजदेहयष्टि–स्वकीयशरीरं, आकृष्य गृहीतताम्बूलसुगन्धमाल्या सती तस्य उपपतेः जारस्य समीपं जगाम ॥

अन्वेष्टुकामो नृपतिश्च तस्या
दुश्चेष्टितं कोशनिसृष्टखड्गः ।
अन्वव्रजत्तत्पदवीं निगूढ–
मासन्नविध्वंस इवापनीतिम् ॥ ५१ ॥

५१. अन्वेष्टुकाम इत्यादि । तस्या दुश्चेष्टितं–दुराचारं, अन्वेष्टुकाम.–'तुमो मनस्कामे' ( शा. व्या. सू. II. ii 69 ) इति तुमो मकारस्य लोपः कोशनिसृष्टखड्गः–कोशं–पिधानं, तेन निसृष्टः खड्गः यस्य सः, तयोक्तः नृपतिः

---

१ °राज M, P, T, E. २ सर्जितं P. ३ °सुगन्धि ४ °निरूढ° M, P.

यशोधरः तत्पदवीं–तस्याः देव्याः मार्गं अन्वव्रजत्, निगूढं–गुप्तं यथा भवति तथा। अनुगतोऽभूत्। कथमिव ? अपनीतिं–नीतिरहितं पुमांसं, आसन्नविध्वंस इव–समीपोपगतनाश इव ॥

> विलम्ब्य कालं नरनाथपत्नी–
> मुपस्थितां प्रत्युदितप्रकोपः।
> आकृष्य केशग्रहणेन घोरं
> जघान जारः स वरत्रमुष्ट्या ॥ ५२ ॥

५२. विलंब्येत्यादि। कालं विलंब्य–स्ववेलामतिक्रम्य, उपस्थितां–प्राप्तां, नरनाथपत्नीं प्रति, उदितप्रकोपः–सञ्जातसंरोषः, स जारः केशग्रहणेन–पुरःशिरोरुहस्वीकारेण, घोरं–दारुणं यथा भवति तथा, आकृष्य–इतस्ततः आन्दोलयित्वा, वरत्रमुष्ट्या–चर्मरज्जुपरिकलितमुष्टिना। 'नद्र्यां वरत्रा स्त्री स्याच्चर्मरज्जौ तु न द्वयोः' इति विश्वप्रकाशः। जघान–ताडनं कृतवान् ॥

> निकृष्यमाणा भुवि तेन पद्भ्यां[1]
> मलीमसेनाकृतविप्रलापा।
> इतस्ततोऽगात्तमसेव काले
> निपीड्यमाना दिवि चन्द्रकान्तिः ॥ ५३ ॥

५३. निकृष्येत्यादि। मलीमसेन तेन पद्भ्यां चरणाभ्यां भुवि निकृष्यमाणा–ताड्यमाना, अकृतविप्रलापा–रोदनरहिता, बन्धकी ततोऽनन्तरं ततः–तस्मिन्, जारे अगात्–जारमुपगतवतीति यावत्। कथमिव ? काले–ग्रहणकाले, मलीमसेन–तमसा मेचकरूपेण राहुणा। 'तमस्तु राहुः स्वर्भानु'रित्यमरः। दिव्याकाशे निपीड्यमाना चन्द्रकान्तिरिव ॥

> कण्ठे पदं न्यस्य च गाढमूर्छां
> स तामवादीदिति सोपहासम्।
> पादौ वहेऽहं तव तन्वि मूर्ध्ना
> मूका कुतस्तिष्ठसि मुञ्च शोकम् ॥ ५४ ॥

५४. कण्ठ इत्यादि। स जारस्तस्याः कण्ठे पदं न्यस्य गाढमूर्छां तां बन्धकीं सोपहासं। 'अट्टहासः सोपहासः प्रहासः परिकथ्यते' इति विश्वप्रकाशः। भो तन्वि, तव पादौ अहं मूर्ध्ना वहे–मस्तकेन उद्धरामि। त्वं मूका कुतस्तिष्ठसि–किमर्थमभापणवती प्रतिभासमानासि, इत्यट्टहासं यथा भवति तथा इत्यवादीत्–अभाणीत् ॥

---

१ निकृष्य E, P, T, M. २ ना पदाभ्यां P. ३ तत° P. ४ कोपम् P, Ar.

निःश्वस्य सा तं कथमप्यवादी-
दागो न मे संहर कान्त कोपम् ।
राज्ञा सहार्धासनमेव दीर्घं
हेतुस्तु मे कालविलम्बनस्य ॥ ५५ ॥

५५. निःश्वस्येत्यादि । सा बन्धकी कथमपि निःश्वस्य तं उपपतिं अवादीत् । भो कान्त, मे–मम, आगः न–अपराधः न; आगोऽपराधो मन्तुश्च[१] इत्यमरः । यदाह माघः—

' सहिष्ये शतमागांसि ' (II. 108)

इति । कोपं संहर–क्रोधं परिहर; तु भेदोऽस्ति । ' तु स्याद्भेदेऽवधारणे ' इत्यमरः । मे कालविलम्बनस्य राज्ञा सहार्धासनमेव दीर्घं–चिरं, हेतुः–कारणम् ॥

रूपादिभिस्त्वय्यवसायिभिर्मे
तृप्यन्ति सर्वाण्यपि चेन्द्रियाणि ।
त्वं जीवितव्यं मम यावदायु-
रनादरस्त्वय्यथ किं मम स्यात् ॥ ५६ ॥

५६. रूपेत्यादि । त्वयि भवति अवसायिभिः स्थितैः रूपादिभिः मे सर्वाणीन्द्रियाणि च तृप्यन्ति । मम यावदायुः–आयुष्यावसानपर्यन्तं । ' यावत्तावच्च साकल्ये ' इत्यमरः । अव्ययीभावसमासोऽयं । त्वं जीवितव्यं-जीवनं । अथ-अथशब्दः प्रश्ने वर्तते । ' मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ ' इत्यमरः । त्वयि मम अनादरः किं–कथं स्यात् ॥

प्रत्यायितेनेत्युपभुज्यमानां
राजा स तां तेन विलोक्य कोपात् ।
आन्दोलयन् खड्गमुभौ जिघांसुः
पुनर्वितर्कं धृतिमानकार्षीत् ॥ ५७ ॥

५७. प्रत्यायितेनेत्यादि । इति प्रत्यायितेन–विश्वसितेन तेन उपपतिना संभुज्यमानां तां बन्धकीं विलोक्य स राजा कोपात् खड्गमान्दोलयन्, उभौ जिघांसुः–हन्तुं इच्छुः सन्, पुनः धृतिमान्–धैर्यवान् भूत्वा वितर्कं अकार्षीत्–अकृत ॥

---

१ 'त्यनु' M, P.

क्षुद्रः कियानेष गजोपजीवी
न जातु नारी विकृतापि वध्या ।
सक्षत्रमेतन्मम तन्न किं तु
यशः परं भ्रश्यति हारशुभ्रम् ॥ ५८ ॥

५८. क्षुद्र इत्यादि । गजोपजीवी एषः, क्षुद्रः—नीचः कियान्; नारी विकृतापि न वध्या । यदाह वसिष्ठः—

" न हन्याद्बलां विप्रं कृती चारित्रवर्जितम् ॥ "

इति स्मृतिः । तथा हि ममैतत् सक्षत्रं न भ्रश्यति—क्षत्रस्य संपत् सक्षत्रं—अव्ययीभावसमासोऽयं । परं—केवलं क्षत्रसंपत् न नश्यति । 'शब्दप्रथासंपत्समृद्धिवृद्ध्यर्थाभावात्ययासंप्रति सुगपद्यानुपश्चयथासदृक्साकल्यान्तेऽव्ययमि'ति (शा. व्या. सू. II 1. 18)। किं तु हारशुभ्रं यशो भ्रश्यति—नश्यति खलु ॥

अयं च युद्धे रिपुवीरघाती
खड्गः कथं क्षुद्रजने निपात्यः ।
दंष्ट्राङ्कुरं निर्दलितेभकुम्भः[1]
न फेरवे जातु हरिः प्रयुङ्क्ते ॥ ५९ ॥

५९. अयमित्यादि । युद्धे रिपुवीरघाती—वीररिपून् हन्तुं शीलमस्यास्तीति वीररिपुघाती । राजदन्तादिषु पाठः । अयं खड्गः क्षत्रजने निपात्यः, क्षुद्रजने कथं निपात्यः । तथाहि, निर्दलितेभकुम्भं—विदारितगजकुम्भस्थलं, हरिः—सिंहः फेरवे—शृगाले दंष्ट्राङ्कुरं जातु न प्रयुङ्क्ते ॥

इति स्वचेतस्यवधार्य शान्त्या
निवृत्य शय्यापुलिने शयानम् ।
तं राजहंसं पुनरन्वशेत
व्यावृत्य सा देव्यपि गुप्तवृत्त्या ॥ ६० ॥

६०. इतीत्यादि । इति स्वचेतसि अवधार्य । उक्तप्रकारेण स्वकीयहृदये निश्चित्य 'इति हेतुप्रकरणप्रकारादिसमाप्तिषु' इत्यमरः । उपशमेन, निवृत्य—निर्गत्य, शय्यापुलिने—शयनसिकतामये शयानं राजहंसं—राजोत्तमं यशोधरं, अनु—पश्चात् सा देव्यपि व्यावृत्य गुप्तवृत्त्या पुनरन्वशेत ॥

---

1 °दलन° E. T. 2 °कुम्भो M.

यत्तस्य गाढा[1] परिरम्भणेच्छा
बबन्ध पूर्वं कृतरागबुद्धे ।
तदेव तस्याः स्तनयोस्तदानीं
कार्कश्यमुद्वेजनमाजहार ॥ ६१ ॥

६१ यदित्यादि । तदानीं तस्या देव्या स्तनयो यत् कार्कश्य कर्कशत्व पूर्व पूर्वस्मिन् काले कृतरागबुद्धे –विरचितानुरागमते यशोधरस्य, गाढा परिरम्भणेच्छा– दृढमालिङ्गनाभिलाप, बबन्ध–चकारेति यावत् । तत्–तत्कुचकार्कश्य यशोधरस्य उद्वेजन–क्लेश, आजहार–चकार ॥

उदस्य[2] तस्या सुरतोपचार
निद्रामिवाधिक्यवतीं दधान ।
तत्साहसोद्वेगवता निकाम
स भूमिनाथो मनसेत्यवोचत् ॥ ६२ ॥

६२ उदस्येत्यादि । स भूमिनाथ , तस्या सुरतोपचार, उदस्य–निरस्य, आधिक्यवतीं निद्रा दधान इव, तत्साहसोद्वेगवता–तस्या साहस–धृष्टता, 'साहस तु दमो दण्ड ' इत्यमर । तेन जात उद्वेग –परिताप , अस्य अस्तीति । तत्साहसोद्वेगवत्, तेन–तत्साहसोद्वेगवता । मनसा निकाम इत्यवोचत् ॥

इय हि सर्वावयवाभिरामा
यस्यापि[3] काम मकरध्वजस्य ।
कथ निकृष्टेऽभिरमेत यद्वा
मोह विधत्ते विषयाभिलाष ॥ ६३ ॥

६३ इयमित्यादि । सर्वावयवाभिरामा–सकलाङ्गबन्धुरेय । मकरध्वजस्यापि काम निकाम वश्या–मदनवशीकरणक्षमेति यावत् । निकृष्टे–नीचे पुसि, कथमभिरमेत । यद्वा । तथाहि विषयाभिलाष मोह विधत्ते ॥

रूपे मनोहारिणि यौवने च
वृथैव पुसामभिमानबुद्धि ।
नतभ्रुवा चेतसि वित्तजन्मा
प्रभुर्यदृच्छति तत्करोति ॥ ६४ ॥

६४ रूप इत्यादि । मनोहारिणि रूपे, मनोहारिणि यौवने च, पुसा अभिमानबुद्धि –गर्वबुद्धि , वृथैव–निरर्थका । नतभ्रुवा स्त्रीणा चेतसि, यदीप्सितमस्ति प्रभु चित्तजन्मा तत्करोति ॥

---

१ गाढ M, P, Γ, E, Ar २ उदास्य P, Ar ३ वश्यापि T
४ निकृष्टेऽपि T, निकृष्टोऽपि P

इयं द्वितीया मम राज्यलक्ष्म्या[1]
यदेवमुच्चैर्व्यभिचारभूमिः।
कथं च तस्यां चपलप्रकृत्यां
विश्वासमत्यन्तमुपव्रजामि ॥ ६५ ॥

६५. इयमित्यादि। मम राज्यलक्ष्म्याः, इयं द्वितीया–सपत्नी, यद्–यस्मात्कारणात् एवं उच्चैः व्यभिचारभूमिः, चपलप्रकृत्यां तस्यां राज्यलक्ष्म्यां अत्यन्तं विश्वासं कथं उपव्रजामि ॥

तत्कामवश्यं धिगिदं मनो मे
धिग्धिग्विभूतीरसुखप्रचाराः।
प्रव्रज्यया तां पुनरव्यपाया-
मन्वेषयिष्यामि हि सिद्धिकान्ताम् ॥ ६६ ॥

६६. तदित्यादि। तत्–तस्मात् कारणात्, कामवश्यं इदं मे मनो धिक्। 'हा धिक् समये' ( शा. व्या. सू. I. iii. 100 ) त्यादि सूत्रेण धिग्योगे द्वितीया। असुखप्रचाराः–दुःखसञ्चाराः, विभूतीः–सम्पदः धिक्। 'धिक् पुनः विशेषखेदोऽस्ति पुनरप्रथमे खेदे' (?) इत्यमरः। अव्यपायां तां सिद्धिकान्तां–मुक्तिवनितां, प्रव्रज्यया–जिनदीक्षया। 'व्रज्यजः क्यप्' ( शा. व्या. सू. IV. iv. 68 ) इति क्यप्प्रत्ययः। अन्वेषयिष्यामि–गवेषितुमिच्छामि। 'अन्वेषितं गवेषितमन्विष्टं मार्गितं मृगितमि'त्यमरः ॥

इत्थं परामर्शपरैर्विकल्पैः
निमील्य नेत्रे नृपतिः शयानः।
आकर्णितैर्बुद्ध इवोत्थितोऽभू-
त्प्राभातिकैर्मङ्गलगीतनादैः ॥ ६७ ॥

६७. इत्थमित्यादि। इत्थं परामर्शपरैर्विकल्पैः नेत्रे निमील्य शयानो नृपतिः आकर्णितैः प्राभातिकैर्मङ्गलगीतनादैः बुद्ध इव उत्थितोऽभूत् ॥

कृत्वा घृतावेक्षणमुत्तमैर्गां
स्पृष्ट्वा भिषग्भिः प्रविचिन्त्य कायम्।
स नर्मबन्धुः प्रगुणोपविष्टां
देवीं सखीमध्यगतामपश्यत् ॥ ६८ ॥

६८. कृत्वेत्यादि। स राजा घृतावेक्षणं कृत्वा। यदाह राघवाङ्कः—
"प्रातर्घृतावेक्षणमाचचार"

---

१ 'लक्ष्म्याः P. २ यदेव' P. ३. परामर्श T. ४. प्रगुणो' P, T, Ar.

इति । गां कपिलां उच्चकैः स्पृष्ट्वा, कार्यं भिषग्भिः चिकित्सकैः, प्रविचिन्त्य प्रविचार्य, प्रकर्षेण विचारणं कारयित्वा, नर्मबन्धुः–क्रीडातत्परः सन् । प्रघुणोपविष्टां–अलिन्दमुपगतां । 'प्रघाणप्रघुणालिन्दा' इत्यमरः । सखीमध्यगतां देवीमपश्यत् ॥

प्रहासगोष्ठीं विरचय्य बुद्ध्या
संक्रीडमानः स तया नरेन्द्रः ।
जघान[1] तस्याः सुकुमारमङ्गं
लीलागृहीतेन नवोत्पलेन ॥ ६९ ॥

६९. प्रहासेत्यादि । स नरेन्द्रः तया देव्या सह संक्रीडमानो भूत्वा प्रहासगोष्ठीं बुद्ध्या विरचय्य–कृत्वा तस्याः सुकुमारमङ्गं लीलागृहीतेन नवोत्पलेन, जघान–ताडयामास॥

[2]तद्वेदनां सोढुमिवाक्षमत्वा–
न्निपातयन्तीं तनुमुर्वरायाम् ।
आश्वासयंश्चन्दनवारिसेकै–
रवोचदेवं कृपयेव भूपः ॥ ७० ॥

७०. तद्वित्यादि । तद्वेदनां नवोत्पलताडनजनितबाधां, सोढुमक्षमत्वात् तनुमुर्वरायां–भूमौ निपातयन्तीं, भूमिपतितामिति यावत् । एवंविधां अमृतमतीं चन्दनवारिसेकैः–श्रीगन्धोदकसेचनैः, आश्वासयन् भूपः कृपयेव एवमवोचत् ॥

अनेन रन्ध्रेषु रसच्युता ते
कृष्णाननेनाद्य निपीडितायाः ।
दैवेन केनापि परं[3] विदग्धे
निवारितः संनिहितोऽपि मृत्युः ॥ ७१ ॥

७१. अनेनेत्यादि । भो विदग्धे हे चतुरे; रन्ध्रेषु–नालच्छिद्रेषु, रसच्युता सलिलस्राविणा, कृष्णाननेन–नीलाननेन अनेन नवोत्पलेन, अद्य निपीडितायाः, ते तव, संनिहितः मृत्युः, केनापि दैवेन–केनचिद्भाग्येन निवारितः वरं–श्रेष्ठं । ध्वनिस्तु–भो विदग्धे, रात्रौ विशेषेण दग्धे–पुष्टे, रन्ध्रेषु–अङ्गव्रणकिमिपूरितच्छिद्रेषु, रसच्युता–पूयच्युता कृष्णाननेन–मलीमसवदनेन अनेन हस्तिपकेन, अद्य–अधुना, निपीडितायाः ते संनिहितो मृत्युः, अपि केनापि दैवेन–कयाचिद्देवतया, परं–अधिकं निवारितः ॥

---

१ तुतोद P. २. This verse is dropped by D. ३ १ वर E, T.

इत्येवमासूचितरात्रिवृत्ता-
माादाय वाचं प्रतिबोध्य राज्ञीम् ।
उद्वेगभूम्ना जननीसमीपं
जगाम राजा क्वचिदव्यवस्थः ॥ ७२ ॥

७२. इतीत्यादि । राजा इत्येवमासूचितरात्रिवृत्तां वाचमादाय, राज्ञीं प्रतिबोध्य–ज्ञापयित्वा, उद्वेगभूम्ना–मनोव्यथाबाहुल्येन । 'निन्दा प्रशंसयोर्भूम बाहुल्ये च निगद्यते' इति विश्वप्रकाशः । क्वचित्–कुत्रापि । अव्यवस्थः–अनवतिष्ठमानो भूत्वा; अथवा, अविश्वासयुक्तः सन् । जननीसमीपं–चन्द्रमतीनिकटं जगाम ॥

विनयविनमन्मूर्धानं सा निरीक्ष्य निजात्मजं
विघृतनयनद्वन्द्वेनापातुमिच्छुरिवादरात् ।
निकटनिहितं मूर्धन्याघ्राय चन्द्रमती तदा
प्रमदमधिकं भेजे भूरिस्नुतोरुपयोधरा ॥ ७३ ॥

७३. विनयेत्यादि । सा चन्द्रमती विनयविनमन्मूर्धानं–विनयेन विनमन्मूर्धानं, विनयेन विनमन् मूर्धा–मस्तकं यस्य सः तथोक्तम् । निजात्मजं–स्वकीय-

प्रम्लायद्वदनाम्बुजे निजवधूदुर्वृत्तचिन्ताभरा-
न्निःश्वस्यायतमुष्णमुष्णमवनीचक्रेश्वरे तस्थुषि ।
इत्थं चन्द्रमती तदेकतनयं मोहादवोचद्वचः
दृप्तारातिविमर्दलब्धविजयश्रीदत्तकीर्तिध्वजम् ॥ ७५ ॥

इति श्रीवादिराजविरचिते यशोधरचरिते महाकाव्ये
द्वितीयः सर्गः ।

७५. प्रम्लायदिति । निजवधूदुर्वृत्तचिन्ताभरात् निजवध्वा दुर्वृत्तं—दुराचरणं, तेन जनितचिन्ता, तस्य भराऽतिशयात् प्रम्लायद्वदनाम्बुजे—मन्दप्रकाशवदास्य-कमले, अवनीचक्रेश्वरे—भूवलयवल्लभे यशोधरे । उष्णमुष्णं निःश्वस्य तस्थुषि सति, चन्द्रमती दृप्तारातिविमर्दलब्धविजयश्रीदत्तकीर्तिध्वजं—दृप्ताश्च, ते अरातयश्च, दृप्तारातयः; तेषां विमर्दः—विनाशः, तेन लब्धा—प्राप्ता, विजयश्रीः, तया दत्ता चासौ कीर्तिश्च, तस्याः ध्वजः, तं । एकतनयं मोहाच्च वचः इत्थं अवोचत् । इदं वृत्तं शार्दूलविक्रीडितम् ॥

इति श्रीवादिराजकृत-यशोधरमहाकाव्य-टीकायां लक्ष्मणकृतायां द्वितीयसर्गः ॥

---

१ तदेक° M, P, Ar. २. °श्रीदत्त° M.

# तृतीयः सर्गः

अद्वितीयभुजविक्रम तुभ्यं
शात्रवस्तनय न प्रभवन्ति ।
निःसपत्नमपि राज्यमिदं ते
क्षारवारिपरिधौ वसुधायाम् ॥ १ ॥

राजन्ति रम्या हि वचोविलासा
गुणान्विता हारनिभा बुधानाम् ।
श्रीवादिराजस्य विनिर्गता ये
व्रजन्ति कर्णाभरणत्वमुर्व्याम् ॥

**१. अद्वितीयेत्यादि** । अद्वितीयभुजविक्रम–तुलारहितबाहुपराक्रम, भो तनय, तुभ्यं भवते, क्षारवारिपरिधौ–लवणोदकपरिवेष्टितायां वसुधायां शात्रवोऽपि यतो न प्रभवन्ति–समर्था न प्रभवन्ति, ततः ते तव इदं राज्यं, निस्सपत्नं–विपक्षपक्षरहितं । इदं स्वागता वृत्तम् ॥

अर्थिलोकजलदैरनुवेलं
गृह्यते यदपि संस्तुतिगर्जैः ।
अक्षयस्तदपि तावतिथस्ते[1]
वस्तुकोशनिवहार्णव एषः ॥ २ ॥

**२. अर्थीत्यादि** । भो तनय, ते–तव, एष वस्तुकोशनिवहार्णवः–वस्तूनां वित्तानां कोशः अर्थौघः । 'कोशोऽस्त्री कुट्मले खड्गपिधानेऽर्थौघदिव्ययोः' इत्यमरः । स एवार्णवः–समुद्रः । संस्तुतिगर्जैः–संस्तुतिरेव गर्जः, स्तनितं येषु तैरर्थिलोकजलदैः–याचकजनमेघैः । अनुवेलं–अनवरतं सकलवेलायां चेत्यव्ययीभावसमासः । 'अब्ध्यम्बुविकृतौ वेला कालमर्यादयोरपि' इत्यमरः । गृह्यत इति यावत् । तदपि तावतिथः–तावत्प्रमाणो भूत्वा । अक्षयः–क्षयरहितो वर्तते । 'घुतोरियटे'ति सूत्रेणेयट् प्रत्ययः ॥

---

१. तावदद' M.

पीवरस्तनभरोद्धृतहाराः
स्मेरचारुवदनाश्च तरुण्यः ।
सन्ति कन्तुरसिकस्य रिरंसोः
स्निग्धदीर्घपरिमुग्धदृशस्ते§ ॥ ३ ॥

३. पीवरेत्यादि । भो तनय, पीवरस्तनभरोद्धृतहाराः—पीवरौ च तौ स्तनौ च तयोः भरः अतिशयः, तेन उद्धृतः हारः यासु ताः । स्मेरचारुवदनाः—स्मेरेण, ईषद्धसनेन चारुवदनाः । स्निग्धदीर्घपरिमुग्धदृशः—स्निग्धे मसृणे 'चिक्कणं मसृणं स्निग्धं' मित्यमरः । दीर्घे—आयते, परिमुग्धे—मनोहरे दृशौ—नयने यासु ताः तरुण्यः । कन्तुरसिकस्य—कामवत् शृङ्गारकलितस्य, रिरंसोः—रन्तुमिच्छुः रिरंसुः, तस्य । ते—तव, सन्ति—विद्यन्ते ॥

ग्रन्थसङ्गतनिबन्धनदक्षाः
रूढकर्मविधयो दृढभक्त्या ।
चिन्तयन्ति भिषजस्तव कार्यं
दुष्टवैद्यगजकेसरिणस्ते ॥ ४ ॥

४. ग्रन्थेत्यादि । भो तनय, ग्रन्थसङ्गतनिबन्धनदक्षाः—ग्रन्था वैद्यशास्त्राणि तेषां सङ्गतं मनोहरं, 'सङ्गतं हृदयंगम' मित्यमरः । निबन्धनं—व्याख्यानं, तेन दक्षाः—रूढकर्मविधयः, रूढः प्रसिद्धः । चिकित्सा कर्मविधिर्येषु ते । दुष्टवैद्यगजकेसरिणः—दुष्टा—दुग्धहस्ताः ते एव वैद्याः—दुष्टवैद्याः, ते एव गजाः, तेषां केसरिणः । ते—प्रसिद्धाः, भिषजः—चिकित्सकाः दृढभक्त्या चिन्तयन्ति—विचारयन्ति ॥

हृद्यवाद्यमृदुमेदुरनादैः
गायकीजनमनोहरगीतैः ।
नर्तकीसरसनर्तनकेली—
लीलया वससि चान्यविनोदैः ॥ ५ ॥

५. हृद्यवाद्येत्यादि । भो तनय, हृद्यवाद्यमृदुमेदुरनादैः—हृद्यं च तत् वाद्यं च, तस्य मृदु—मार्दवं, मेदुरः—सान्द्रः, स्निग्धः 'सान्द्रस्निग्धस्तु मेदुरः' इत्यमरः । नादः—ध्वनिः, येषु तानि, तैः । गायकीजनमनोहरगीतैः, नर्तकीसरसनर्तनकेली—लीलया—नर्तकीनां सरसनर्तनं सानुरागनटनं तस्य केली—क्रीडा, तस्यां । लीला—विलासः 'लीला-विलासक्रिययो'रित्यमरः । तया अन्यविनोदैश्च वससि—तिष्ठसि ॥

---

§ The following four verses are dropped in P.

१. The number of this verse is 4 in A, M & E; but 5 in G, and Ar; 6 in T, H.

२. The number of this verse is 5 in M, H; but 4 in F, T; 6 in G, Ar; and 8 in A. ३. गायका° A.

(a) सावलेपकृतिविवेचनशक्तैः
सूक्तिसारसरलामृतवाग्भिः ।
त्वं विनोदसुखमृच्छसि गोष्ठ्यां
वस्तुवर्णकविताचतुरस्रैः ॥ ६ ॥

६ (a) सावलेपेत्यादि। भो तनय, गोष्ठ्या सभायां। 'समज्या परिषद्गोष्ठी सभे'त्यमर. । अवलेपो गर्व. । 'गर्वावलेपो मानश्चे'ति विश्व. । अवलेपेन सहिता सावलेपा–गर्विणि तेषा विवेचन, पृथक्करण, तस्मिन् । शक्ता.–समर्था., तैः सूक्तिसारसरलामृतवाग्भिः – सूक्तिषु सार, सरल–सर्वसुलभममृत–पीयूष सूक्तिसारसरलामृतरूप, तेन उपयुता वाक् एषां ते, तैः । वस्तुवर्णकविताचतुरस्रैः –यथावद्वस्तुकथनं वस्तुकम्। उपमोत्प्रेक्षादिवर्णनाङ्किता कविता कवितरं वर्णकम्। तासु वस्तुवर्णकवितासु। चतुरस्रैः प्रौढैः, साङ्क। 'त्रिचतुरोपचतुराचतुरविचतुरसुचतुरसुप्रातसुश्वसुदिवैगीपदाजपदप्रोष्ठपदचतुरस्रशारिकुक्षा' (शा. व्या सू II 1 190) इति सूत्रेण चतुरस्रशब्दस्य प्रौढत्वमुक्त। विनोदसुख–क्रीडासुख, ऋच्छसि–गच्छसि।

(b) प्रौढसाधुवचनैर्गमकैः पद-
तर्कपण्डितसुधैर्हठवादैः ।
त्वं विनोदसुखमृच्छसि गोष्ठ्यां
वस्तुवर्णकविताचतुरस्रैः ॥ ६ ॥

६ (b) पाठान्तरमस्ति। प्रौढेत्यादि–भो तनय, त्वं गोष्ठ्या–सभाया– वस्तुवर्णकविताचतुरस्रैः–वस्तुकवर्णककविताचतुरस्रैः कविभिः। गमकैः–गमकिभि,

१ (a) Found as verse No. 4 in Ar and G, as No 5 in E, A, and as No 7 in T, but dropped by all the other Mss But M reads this as follows:—

प्रौढसाधुवचनैः गमकैः स्वैः
सर्वलोकविदिताखिलवादैः।
सर्वशास्त्रकृतया गुरुरूपैः
प्रौढसाधुवचनामृतसारैः ॥

२ (b) is the alternate reading of 6 (a) noted by Laksmana, the commentator It is found as No. 5 in T, A, as No 7 in G, Ar, and I. But M. reads the first line differently —

वादिभिस्त्वमनिशं सुधमेषि

T has an additional verse सर्वलोक .supported only by H, after this.

र्वाचकचतुरैः अक्षरिकादिभिः। दृढवादैः, गाढं यथा भवति तथा स्वीकृतमतनिर्वाहकैः, षट्तर्कषण्मुखबुधैः। षट्तर्का:—सांख्यचार्वाकमीमांसकभाट्टप्राभाकरार्हतमतेषु यानि सम्यगनुभवसाधनशास्त्राणि तेषु, षण्मुखबुधैः स्कन्दसदृशकोविदैः। 'कार्तिकेयो महासेनः शरजन्मा षडाननः' इत्यमरः। प्रौढसाधुवचनैः प्रौढं—मनोहरं, साधु सत्यस्वरूपं वचनं येषां तैः, वाग्मिभिः सार्धं विनोदसुखं कच्चिदसि—क्रीडासुखं यासि॥

तत् किमङ्ग वदनाम्बुरुहे[1] ते
म्लानभावमवलोक्य दिनादौ।
मुक्तहर्षमधुना मम वत्स
क्षारदग्धमिव सीदति चेतः॥७॥

७. तदित्यादि। तत्—तस्मात्कारणात्, भो—अङ्ग, तनूज, तव वदनाम्बुरुहे दिनादौ म्लानभावमवलोक्य, भो वत्स, मुक्तहर्षं मम चेतः क्षारदग्धमिव सीदति—क्लेशं गच्छति॥

इत्युवाच[2] जननीमथ राजा
देवराजसदृशो विभवेन।
आशिषा चिरभृतंभरया ते
सर्वमेव मम देवि सुभद्रम्॥८॥

८. इतीत्यादि। अथशब्दः प्रश्ने वर्तते। विभवेन देवराजसदृशो राजा भो देवि—भो मातः, ते ऋतभरया—सत्यवहेन, मेघर्त खचिते (?) ऋतशब्दात्परोऽमागमः। आशिषा—आशीर्वादेन मम सर्वमेव चिरं सुभद्रं—सुमङ्गलमिति जननीमुवाच॥

किं तु कान्तिरवमुच्य मृगाङ्कं
बिभ्रतं कुवलयोर्जितलक्ष्मीम्।
व्यक्तमद्य तु मया निशि दृष्टा
देवि सङ्गमकरी तिमिरेण॥९॥

९. किमित्यादि। भो देवि, हे मातः, किंतु विशेषोऽस्ति। कान्तिः—नयनबन्धुरा शोभा। कुवलयोर्जितलक्ष्मीं कुमुदविकसनोल्लसितलक्ष्मीं राकां, कौ—पृथिव्याः, वलयं—मण्डलं, तस्योर्जितलक्ष्मीं—श्रेष्ठश्रियं बिभ्रतं—दधानं, मृगाङ्कं—चन्द्रमसं, अवमुच्य—त्यक्त्वा, तिमिरेण सङ्गमकरी—संयोगं कुर्वतीति। व्यक्त अद्य निशि—रात्रौ मया दृष्टा॥

[1] °हे P. The number of this verse is 8 in G and 10 in A.
[2] The number of this verse is 10 in T, 9 in M, and 5 in P. This variation is kept up till the end of the canto.

तादृशं तु सकृदप्युपलब्धं
जन्मनीह न मया स्वपतापि ।
तत्पुनर्मनसि कीलितमुच्चै-
र्दुःसहं वितनुते मम दुःखम् ॥ १० ॥

१०. तादृशमित्यादि । इह जन्मनि स्वपता मयापि तादृशं तु सकृदपि-कदाचिदपि, नोपलब्धं; पुनर्मनसि कीलितमुच्चैर्दुःसहं दुःखं वितनुते-करोति ॥

तस्य तत्तु वचनं निजनारी-
दुश्चरित्रपिशुनं क्षितिभर्तुः ।
स्वप्नमेव परिभाव्य विमूढा
संभ्रमादिदमवोचत माता ॥ ११ ॥

११. तस्येत्यादि । निजभर्तुः स्वकीयजनपोषकस्य । 'स्वके नित्ये निजं त्रिषु' इत्यमरः । तस्य-यशोधरस्य, निजनारीदुश्चरित्रपिशुनं-स्वकीयभार्यादुराचरणसूचकं, तद्वचनं तु विमूढा माता चन्द्रमती, स्वप्नमेव परिभाव्य संभ्रमादिदं अवोचत ॥

अत्र[1] वत्स वितनु प्रतिकारं
स्वप्नदर्शनमिदं खलु दुष्टम् ।
चण्डिका सपदि पूजयितव्या
सा हि विघ्नशमनी परितुष्टा ॥ १२ ॥

१२. अत्रेत्यादि । अत्रास्मिन् स्वप्ने प्रतिकारं वितनु-कुरु, इदं स्वप्नदर्शनं दुष्टं खलु; चण्डिका-चण्डमारी, सपदि पूजयितव्या । परितुष्टा सा विघ्नशमनी हि ॥

आविकं तनय घातय सद्य-
स्तद्गृहे तव भुजासिमुखेन ।
सा तु[2] तेन बलिना परितृप्ता[3]
स्वप्नदोषमचिरेण निहन्ति ॥ १३ ॥

१३. आविकमित्यादि । भो तनय, तद्गृहे चण्डमारीसद्मनि, तव भुजासिमुखेन-करकलितखड्गमुखेन, "भुजो बाहौ भुजः करे" इति नागवर्मा । आविकं-अवीनां वृन्दं, मेषाणां सन्दोहं । 'अवयः शैलमेषार्काः' इत्यमरः । 'तेन दीव्यति संसृष्टमिति' ( का. रू. under I. ५०४ ) सूत्रेणेकण् प्रत्ययः । घातय-यज हि । तेन बलिना पूजय । सद्यः परितृप्ताऽचिरेण-झटिति स्वप्नदोषं निहन्ति ॥

1. तत्र A. 2. च M, P, Ar. 3. परितुष्टा P.

इत्यवोचत नृपस्तु पिधाय
श्रोत्ररन्ध्रयुगल स कृपालु ।
देवि किं पुनरिदं तव युक्त
वक्तुमित्थमविचारमधर्म्यम् ॥ १४ ॥

१४ इतीत्यादि । कृपालु स नृपस्तु श्रोत्ररन्ध्रयुगल-श्रोत्रयो कर्णयो रन्ध्रे-सुषिरे, तयो युगल-यमल कराभ्या पिधाय-तिरोधाय, इत्यवोचत-देवि हे मात., अविचार-विचाररहित, अधर्म्य-धर्मादतिक्रान्त । 'धर्मपथ्यर्थन्यायादनपेत' इत्यर्थे यप्रत्यय । इद प्राणिहिंसनमित्थ सद्य पुनर्वक्तु तव युक्त योग्य किम् ।

मानवस्य खलु जीवितमद्य-
श्वीनमस्य तु कृते तनुघाते ।
दुःखमात्मनि सुदुर्धरमौर्ध्व[1]-
देहिकं[2] कथमिवोपनयेयम् ॥ १५ ॥

१५ मानवस्येत्यादि । मानवस्य जीवित जीवन अद्यश्वीन-अद्य वा श्वो वा नश्येत् । 'द्यो गतेऽनागतेऽह्नि श्व ' इत्यमर । 'तु स्याद्भेदेऽवधारणे' इत्यमर । अस्य जीवनस्य कृते निमित्त 'कृत (?) कार्य च निमित्ते च' इति ध्वनिमञ्जरी । तनुघाते सति । 'तनु स्त्रिया शरीरे ना पेलवे जीवने वने' इति विश्व । और्ध्वदेहिक-परलोकजनितदेहलग्न । 'ऊर्ध्वाद्धमदेहाच्चेत्यूर्ध्वस्यैकेषामि'ति ( शा ब्या सू III ; 65 ) और्ध्वदेहिकपदसिद्धि । आत्मनि सुदुर्धर दुःख कथमिव उपनयेयम् । णीञ् प्रापणे इति धातोर्लिङ् परस्मैपदोत्तमपुरुषैकवचनम् ॥

प्रत्ययस्तु सुदृढो[3] जिनधर्मे
मत्कुलक्रमभुवा हि नृपाणाम् ।
तत्र हिंसनमतीव हि निन्द्य
नारकादिभवदुःखनिमित्तम् ॥ १६ ॥

१६ प्रत्ययेत्यादि । मत्कुलक्रमभुवां-मम कुल मत्कुल, मत्कुल क्रमभुवा-अनुक्रमेण सञ्जाताना नृपाणा जिनधर्मे प्रत्यय -विश्वास , 'प्रत्ययोऽधीनशपथ ज्ञानविश्वासहेतुषु' इत्यमर । सुदृढ -अतीव गाढ भवति । तत्प्रसूतेषु राजसु, नारकादिभवदुःखनिमित्त हिंसनमतीव निन्द्य हि ॥

---

१ °मूर्ध्वे P २ देहिक P ३ सुदृढे M

पुत्रवत्सलतया पुनरेवं
देवि मा स्म वचनं मयि वादीः ।
इत्यनेन वचनेन सकोपा[1]
चन्द्रमत्यथ पुनस्तमवादीत् ॥ १७ ॥

१७. पुत्र इत्यादि । भो देवि, हे मातः । पुत्रवत्सलतया पुनरेवं वचनं मयि, मा स्म वादीः–मा स्म वोचः । इति–यशोधरेण यदुक्तं तेनानेन वचनेन सकोपा चन्द्रमती, अथानन्तरं तमवादीत् ॥

अस्तु मद्वचनलङ्घनमेत-
दस्तु ते मतमहिंसनमर्घ्यम् ।
अन्यथा तनय तर्पय देवीं
शालिपिष्टमयकुक्कुटहत्या ॥ १८ ॥

१८. अस्त्वित्यादि । भो तनय, एतत्–मम, वचनलङ्घनमस्तु–भवतु । अहिंसनं ते मतं अर्घ्यमस्तु–पूज्य भवतु । अन्यथा–अन्येन प्रकारेण, शालिपिष्टमयकुक्कुटहत्या–शालिपिष्टेन कृतकुक्कुटहननेन । 'गोव्रीहेः शकृत्पुरोडाशे' ( शा. व्या. सू. II iv 165 ) इति सूत्रेण कृतार्थे मयट् । देवीं तर्पय चण्टमारीं परितोषय ॥

इत्यनुक्षणमुदीरितवाचो
मातुराग्रहमवेत्य स दध्यौ ।
अन्यदुक्तमिदमन्यदिदानी-
मागतं तदिह[2] किं[3] करवाणि ॥ १९ ॥

१९. इतीत्यादि । इति अनुक्षण–क्षणे क्षणे, उदीरितवाचः–उदीरितवाक् यस्याः सा मातुः, आग्रहमवेत्य स राजा दध्यौ–चिन्तयति स्म । यथाह चाणक्यः–
'वञ्चनं चाभिमानं च मतिमान् न प्रकाशयेत् ।'
इति । मयेदमन्यदुक्तं इदानीमन्यदागतं । इह तत्किं करवाणि–करिष्यामि ॥

मातुरुक्तमवमन्तुमयुक्तं
कुत्सितस्तनुमतामपि[4] घातः ।
हन्त केन विधिना मम चित्तं[6]
सङ्कटे निपतितं पुनरस्मिन्[5] ॥ २० ॥

२०. मातुरित्यादि । मातुरुक्तमवमन्तुमयुक्तं, तनुमतां–प्राणिनां, घातोऽपि वधस्तु कुत्सितः । मम चित्तं केन विधिना–दैवेन, 'विधिर्विधाने दैवेऽपी'त्यमरः ।

१ सरोषा M २ तदिह P, M ३ तत् P, M ४ तनुभृतामपि P, T, Ar ५ पुनरस्मिन् P, M, Ar ६. मम चनः P, मम चित्त M

अस्मिन् सङ्कटे–सम्बाधे, । 'सङ्कट ना तु सम्बाध' इत्यमर । पुनर्निपतित, हन्त–वत । 'हन्त हर्षेऽनुकम्पाया' इत्यमर ॥

चेतनप्रतिकृतावपि हिंसा
कल्पिता भवति चेतन एव ।
आस्रवो यदभिसन्धिविशेषै[1]
कर्मणामभिमतो[2] मुनिमुख्यै ॥ २१ ॥

२१ चेतनेत्यादि । यस्मात्, यदभिसन्धिविशेषै–यस्मिन् अभिसन्धि रभिप्राय तस्य विशेषै, कर्मणामास्रव–आगमनमिति, मुनिमुख्यै गणधर, अभिमतोऽङ्गीकृत । तस्मात् चेतनप्रतिकृतौ–जीवस्य प्रतिनिधौ, कल्पिता हिंसापि, चेतन एव–प्राणिन्येव कल्पिता भवति ॥

इत्यनुस्मृतविवेकरसोऽपि
प्रेरित सपदि मातरि भक्त्या ।
अम्बया सह महीपतिरुच्चै–
श्चण्डिकागृहमयान्नयहीन ॥ २२ ॥

२२ इतीत्यादि । इत्यनुस्मृतविवेकरसोऽपि मातरि भक्त्या सपदि प्ररितो महीपति उच्चै, नयहीनो भूत्वा, अम्बया सह–मात्रा साक, चण्डिकागृह–चण्डमारीसदन अयादगमत् ॥

अष्टमीदिवसमङ्गलवारे
शुद्धभाजि सुतरामिषमासे ।
त्रि प्रदक्षिणकृतो[3] नरनाथ–
श्चण्डिकामनमदानतमौलि[4] ॥ २३ ॥

२३ अष्टमीत्यादि । अष्टमीदिवसमङ्गलवारे । शुद्धभाजि–शुक्लपक्षभाजि, इषमासे–आश्वयुजमासे, 'स्यादाश्विन इषोऽपि' इत्यमर । नरनाथ चण्डिका त्रि प्रदक्षिण कृत सन्, आनतमौलि–आनतमस्तक भूत्वा । 'चूडा किरीट केशाश्च सयता मौलयस्त्रय' इत्यमर । अनमत् चण्डिकामनसीत् ॥

---

१ विशेष P AT २ मभिहितो T ३ रम्बिका P ४ शुद्धि P
५ कृतो P

तत्र कृत्रिममसौ कृकवाकुं
चित्रसौष्ठवनिवासितदैवम् ।
देवि तृप्य बलिरेष तवेति
व्याजघान निजखड्गमुखेन ॥ २४ ॥

२४ तत्रेत्यादि । तत्र चण्डिकासद्मनि असौ राजा चित्रसौष्ठवनिवासितदैव-चित्रस्य सौष्ठवे-रम्यत्वे, निवासितदैव-निवासीभूतग्रह, कृत्रिम । 'ड्वितोऽथुक्त्री' (शा व्या सू IV iv 57) इति सूत्रेण क्त्रिमः । कृकवाकुं-शालिपिष्टविरचितताम्रचूड । 'कृकवाकु. ताम्रचूड. कुक्कुटश्चरणायुधः' इत्यमरः । देवि-भो चण्डमारि, तव एव बलिरय, तृप्य इति-सतृप्ता भवेति । निजखड्गमुखेन व्याजघान-मस्तक कण्ठाद् व्यतिरिक्तमकरोत् इति भावः ॥

किञ्चिदन्तरमुदीरितनादं
लूनमस्तकमवेक्ष्य पतन्तम् ।
खड्गमुष्टिमवमुच्य शुशोच
क्लेशकृत् खलु सतामविवेक. ॥ २५ ॥

२५ किञ्चिदित्यादि । किञ्चिदन्तर-कियद्दूर उदीरितनाद-उच्चारितनिनद, लूनमस्तक-कबन्धरूप पतन्त पतत्रिण ताम्रचूड । 'पतत्रिपत्रिपतगपतत्पत्ररथाण्डजा.' इत्यमर । अवेक्ष्य राजा । खड्गमुष्टि । मुष्टौ स्थितखड्ग । 'कालाकृतिसुखादिभ्यो वा' (शा व्या सू II i 112) इति सूत्रेण खड्गस्य पूर्वनिपातः । अवमुच्य-त्यक्त्वा । शुशोच-शोक कृतवान् । तथा हि-सतां अविवेकः-आत्मविचाररहितत्व । 'विवेक. पृथगात्मते'त्यमर. । क्लेशकृत् खलु-मनोव्यथां विदधाति ननु ॥

हा हतोऽस्मि सुदृशामृतमत्या
हा हतोऽस्मि विनयेन जनन्या[1] ।
हा गतोऽस्मि नरके चिरवासं
हा गतोऽस्मि भवबन्धमजय्यम्[2] ॥ २६ ॥

२६ हा हत इत्यादि । अमृतमत्या, सुदृशा-वनितया हतोऽस्मि हा, जनन्या. विनयेन हतोऽस्मि हा, 'हाहहेत्यद्भुते खेदे' त्यमरः । नरके चिरवासं हतो गतोऽस्मि । 'हन हिंसागत्यो'रिति धातोर्गत्यर्था विद्यते । अजय्य जेतुमशक्यं । भवबन्धं संसारबन्धनं । गतोऽस्मि हा ॥

---

१ हतोऽस्म्यस्मद निजया-या P  २ भवयम् P

कृत्रिमः क्व पुनरेष पतत्री
क्वासिघातपरिदेवनशब्दः ।
हन्त दुर्गतिवधूरमुना मां
छद्मना नियतमाह्वयतीव ॥ २७ ॥

२७. कृत्रिम इत्यादि । कृत्रिमः एषः पतत्री क्व, असिघातपरिदेवनशब्दः क्व, खड्गविदलनमस्तकरोदननिनदः क्व, हन्त–बत, दुर्गतिवधूः–नरकवनिता अमुना, छद्मना–कृत्रिमपतत्रिनिनदव्याजेन मामाह्वयतीव ॥

भावयन्निति[1] परिप्लुतनेत्रो
राजमन्दिरमवाप्य नरेन्द्रः ॥
भोगनिःस्पृहमतिर्निजपुत्रे
निर्मुमोच पृथिवीपतिलक्ष्मीम् ॥ २८ ॥

२८. भावयन्नित्यादि । इति भावयन्–चिन्तयन्, परिप्लुतनेत्रः–अश्रुमिश्रितनेत्रः, नरेन्द्रः–राजा, मन्दिरमवाप्य, भोगनिःस्पृहमतिः भूत्वा, पृथिवीपतिलक्ष्मीं निजपुत्रे यशोमतौ निर्मुमोच–स्वतनुजाय राज्यं दत्तवानिति यावत् ॥

तं तपस्यभिमुखं नरपालं
बन्धकी[2] वचनमेतदवोचत् ।
आर्यपुत्र परिहृत्य[3] भवन्तं
क्व पुनर्मम गृहे परितोषः ॥ २९ ॥

२९. तमित्यादि । बन्धकी–अमृतमती, तपस्यभिमुखं तं नरपालं एतद्वचनमवोचत्–भो आर्यपुत्र–वल्लभ, भवन्त–त्वा, परिहृत्य, पुनर्मम गृहे–राजमन्दिरे, परितोषः क्वः ॥

अद्य ते सुतवरं नवराजं
स्थापयन्[4] नृप यशोमतिमुर्व्याम् ।
मद्गृहेऽमृतमवाश्य वनान्तं
गन्तुमर्हसि मया सह पश्चात् ॥ ३० ॥

३०. अद्येत्यादि । भो नृप, अद्य ते–तव, सुतवरं नवराजं यशोमतिमुर्व्यां स्थापयन्, मद्गृहेऽमृतमवाश्य–'अमृतं दिवि से मोक्षे यज्ञशेषे महाशने, आहारे

---

[1] नियति M. [2] शोचयन्निति P. [3] बन्धुकी P. [4] परिमुच्य P, Ar. [5] तोषयन् P.

सलिले...' इति व्याडिः । आहारं भुक्त्वा पश्चान्मया सह वनान्तं–तपोवनमध्यं । 'अन्तो नाशे मध्यभागे मृत्यौ ग्रामान्तरे पुमान्' इति विश्वः । गन्तुमर्हसि–प्रयातुं समर्थोऽसि ॥

> अन्तरङ्गमवयन्नपि तस्याः
> सद्म भोक्तुमगमत् स जनन्या ।
> देहिनामुपगते हि विनाशे
> दुर्नयोऽपि सुनयः प्रतिभाति ॥ ३१ ॥

३१. अन्तरङ्गमित्यादि । स राजा । तस्याः वन्यस्याः अन्तरङ्गं–हृदयं । 'अन्तरङ्गं तु हृदयं चेतोऽन्तःकरणं मनः' इति विश्वः । अवयन्–जानन्नपि, जनन्या सह–चन्द्रमत्याः सार्कं, अमृतमत्याः सद्म भोक्तुं अगमत्–अगच्छत् । तथाहि–विनाशे उपगते सति देहिनां जनानां दुर्नयोऽपि दुर्नीतिरपि, सुनयः प्रतिभाति–प्रकाशते ॥

> तावुभावपि तयोपनिबद्धै–
> र्मोदकैर्विषमयैर्मधुदिग्धैः[1] ।
> जीवितात्ययमवापतुरार्त–
> ध्यायिनौ रुचिवशादतिजग्धैः ॥ ३२ ॥

३२. तावित्यादि । आर्तध्यायिनौ तौ उभौ अपि, तया उपनिबद्धैः अमृतमत्या विरचितैः, मृदुदिग्धैः–मृदुना लेपितैः, रुचिवशादतिजग्धैः–स्वादुवशादतिचर्वितैः मोदकैः–लड्डुकैः जीवितात्ययं–मरणमवापतुः; अगमताम् ॥

> विन्ध्यनामनि गिरौ स[2] मयूरी–
> गर्भवासमगमन्नरपालः ।
> पालयन्त्यपरभृतं पुनरण्डं
> दण्डकेन[3] शिखिनी विनिजघ्ने ॥ ३३ ॥

३३. विन्ध्येत्यादि । स नरपालः विन्ध्यनामनि गिरौ मयूरीगर्भवासमगमत् । तत्र मृगयार्थं गतेन किरातेन अपभृतं–गर्भाद्भिन्नं । अण्डं पालयन्ती, शिखिनी–मयूरी विनिजघ्ने–निहता ॥

---

१. 'मृदु॰' Ar. २. विन्ध्यनामनिगिरावम् M. ३. दण्डकेन T.

लुन्धकस्तु कृपयोद्धृतमण्ड
वर्धयति स[1] दिदेश पुलिन्द्यै[2] ।
वर्धित स[3] च तया पुनरासी
न्नृत्यवर्तुलितरम्यकलाप ॥ ३४ ॥

३४ लु धक इत्यादि । लुन्धकस्तु कृपयोद्धृतमण्ड अण्डक । एतन्न पुसकम् । 'सुमुखि तव मौक्तिकमिद नासाभरण विराजते वदने । अण्डमिव पुण्डरीके निहित राजहसेने निरत् । वर्धयेति । रक्षेति । पुलिन्द्यै—स्वभार्यायै दिदेश—दत्तवान् । 'पुलिन्द शबरो दस्यु लुब्धक' इति विश्व । तया पुलिन्द्या तु वधित स मयूरीपोत पुन नृत्यवर्तुलितरम्यकलाप — नृत्ये नर्तने, वर्तुलित —वलयीभूत, रम्यकलाप —मनोहरबर्ह आसीत् । 'कलापो भूषणे बर्हे तूणीरे' इत्यमर ॥

चन्द्रमत्यपि मृता करहाट
कुक्कुर पुरवरे परिजज्ञे ।
आसदत्पुनरुपायनभूता
तावुभावपि यशोमतिभूप ॥ ३५ ॥

३५ चन्द्रमतीत्यादि । मृता—परासु , चन्द्रमती अपि हन्त 'गर्हासमुच्चयप्रश्नशङ्कासम्भावनास्वपि' इत्यमर । करहाट इति देशे, करहाटनामधेयपुरवरे, श्रेष्ठनगरे, कुक्कुर परिजज्ञे—रात्रिजागर समजनि । 'कुक्कुरो रात्रिजागर' इति धनजय । यशोमतिभूप तौ उभा अपि मयूरकुक्कुरौ उपायनभूतौ पुन आसदत्—अगमत् ॥

तत्र[4] तौ सकलभूतलराज्य
दीर्घमन्वभवता जनद्दृष्टौ[5] ।
तत्र विट्किकिमिकुलाशनकष्ट
दुर्जयो जगति कर्मविपाक ॥ ३६ ॥

३६ तत्रेत्यादि । तत्रोज्जयिन्या पुरीजनन्यौ तौ मयूररात्रिजागरौ, सकलभूतलराज्यसञ्जातसुख, दीर्घ—चिरतर, अन्वभवताम् । तत्र—पुरे, विट्किकिमि

1 नि M 2 पुर न्नै M 3 तु M P, Ar 4 स M P Ar
5 यशोधर T 6 यत्र T 7 This line is read as a and c in the text read as b in M, P, and Ar

कुलाशनकष्टं–विट् शकृत्, क्रिमयः–स्त्रसाः, तेषां कुलं–समूहाङ्कितं, अशनकष्टं–कष्टाशनं। राजदन्तादिपूर्वनिपातः। यदाह माघः—

"त्वयि भक्तिमता न सत्कृतः
कुरुराजा गुरुरेव चेदिपः।
प्रिथमांसमृगाधिपोज्झितः
किमवद्यः करिकुम्भजो मणिः॥" [शिशुपालवध, XVI. 45]

इति। दीर्घमन्वभवताम्। तथा हि–जगति कर्मविपाकः दुर्जयो हि॥

एकदार्थ स निरीक्ष्य निजस्त्रीं
जारभोगसहितां निजहर्म्ये।
जारचक्षुरुदितस्मृतिरुष्ट–
श्चञ्चुवृक्णमकरोदथ केकी॥ ३७॥

३७. एकदेत्यादि। एकदा–एकस्मिन् दिवसे, मणिहर्म्ये, स केकी–मयूरः, अथ–अनन्तरं उदितस्मृतिरुष्टः–सञ्जातस्मरणेन कुपितो भूत्वा, जातिस्मरो भूतत्वात् कोपयोग्यः। जारचक्षु–हस्तिपकनयनं, चञ्चुवृक्णं त्रोट्या क्षिप्तमकरोत्। 'चञ्चुस्त्रोटिरुभे स्त्रिया'मित्यमरः॥

मस्तके विदलितोऽमृतमत्या
सव्ययः स निपपात धरित्र्याम्।
तं निगृह्य विचचर्व स तु श्वा
पूर्वजन्मनि तु चन्द्रमती या॥ ३८॥

३८. मस्तक इत्यादि। अमृतमत्या स्वकरतलेन मस्तके विदलितः स केकी सव्ययो भूत्वा, धरित्र्यां पपात। पूर्वजन्मनि–गतभवे या चन्द्रमती समजनि। इदानीं चन्द्रमतीचरः स श्वा तं मयूरं, निगृह्य–निगृहीत्वा चचर्व–चर्वितवान्, भक्षणमकृतेति यावत्। 'चमु अदने' इति धातुः॥

---

१. एकदा तु T, M, P, E, Ar. २. निरूप्य P. ३. मणि° P, Ar. ४. c and d become d and c respectively in M, P, and Ar. ५. °विद° P. ६. °दिवि P.

तं पुन प्रियमयूरविघात
भूपतिस्तु नितरामसहिष्णु ।
रात्रिजागरममारयदुच्चै-
रक्षदेवनकृता फलकेन ॥ ३९ ॥

३९ तमित्यादि । भूपतिस्तु प्रियमयूरविघात, रात्रिजागर श्वान, पुन — नितरा असहिष्णु । अक्षदेवनकृता—'अक्षस्तुषे रथाङ्गे स्यात् क्रीडाया साधने पुमान्' इति विश्वप्रकाश । अक्षाभ्या दीव्यतीति अक्षदेवन, तदर्थ करोतीति कृत। तेन—अक्षदेवनकृता, फलकेन उच्चै अमारयत् । 'आशीरयतन्योश्च मृङ्गी'(?) त्यात्मनेपद करणीय, किंतु चुरादिपठितत्वात् परस्मैपद, लङ्, मारितवान् ॥

तौ पुनर्नरपतिर्विगतासू
वीक्ष्य शोकमधिक प्रतिभेजे ।
आश्रितेषु हि कृपाबहुलत्वात्
क्षुद्रता न गणयन्ति महान्त [1] ॥ ४० ॥

४० तावित्यादि । पुनर्नरपति विगतासू—त्यक्तजीविकामयूररात्रिजागरौ वीक्ष्य, अधिक शोक तौ प्रतिभेजे—स्वीकृतवान् । तथा हि महान्त आश्रितेषु कृपाबहुलत्वात् क्षुद्रतां न गणयन्ति ॥

कानने पृथुनि विन्ध्यसमीपे
हस्तिसिंहशरभादिनिवासे ।
तीक्ष्णकण्टकशिख शल्लोऽभू-
ज्जीवितात्ययगत शितिकण्ठ ॥ ४१ ॥

४१ कानन इत्यादि । जीवितात्ययगत —परासु, शितिकण्ठ —मयूर । हस्तिसिंहशरभादिनिवासे—हस्तिनश्च, सिंहाश्च, शरभाश्च परस्परविरोधिन ते आदिर्येषा ते, हस्तिसिंहशरभादय, तेषा निवास यत्र, तस्मिन् । पृथुनि वि॰ य समीपे कानने । तीक्ष्णकण्टकशिख —तिग्मसूचीसदृशकण्टकाम । 'सूच्यग्र क्षुद्र-शत्रौ च रोमहर्षे च कण्टक' इत्यमर । शल्ल —शल्यमृगोऽभूत् । 'श्वावित्तु शल्यस्तल्लोम्नि शल्ली शलल शल-' इत्यमर ।

---

१ क्षुद्रता P, Ar  २ T reads *ll* as *ed*

सोऽपि कृष्णभुजगोऽजनि तस्मि-
ञ्जीवितस्य विलये मृगदृशः ।
तं कदाचिदुपहत्य[1] जघान
प्राच्यवैरकुपितः शललोऽसौ ॥ ४१ ॥

४१ सोऽपीत्यादि । सोऽपि मृगदृशः—कुक्कुरः, जीवितस्य विलये जीवनस्य विनाशे, तस्मिन् विन्ध्यसमीपे वने कृष्णभुजगोऽजनि । तत्रासौ शललः प्राच्यवैरकुपितः, प्राग्भवं प्राच्यम् । 'दिगादिभ्यो यत्' (?) इति सूत्रेण भवार्थे यप्रत्ययः । प्राच्यं च तत् वैरं च प्राच्यवैरं तेन कुपितो भूत्वा, कदाचिज्ज्ञात्वा तं कृष्णभुजगम् उपहत्य, वैरीति ज्ञात्वा वा, गत्वा वा, जघान—चचर्व । "धात्वर्थं बाधते कश्चित् कश्चित्तमनुवर्तते" इति ॥

तं च कृष्णभुजगाशनतृप्तं
गन्तुमिच्छुमथ शल्यकमुग्रम् ।
सत्वरं तु परिहृत्य[2] जघान
क्षुत्प्रवेगविकृतश्च तरक्षुः ॥ ४२ ॥

४२ तमित्यादि । कृष्णभुजगाशनतृप्तं कृष्णश्चासौ भुजगश्च कृष्णभुजगः, तमश्नातीति कृष्णभुजगाशनः, तेन तृप्तं साहित्यं प्राप्तम् । गन्तुमिच्छुम् उग्रं शल्यकम् । अथ क्षुत्प्रवेगविकृतः—क्षुधः—बुभुक्षायाः, प्रवेगः—बाहुल्यम् । 'प्रवेगः पृथुतूर्णयोः' इति विश्वः । 'स्त्री क्षुत् क्षुताक्षुतं नाक्षुः क्षवः' इति विश्वः । तेन विकृतः । नम्रीभूतशरीरः । तरक्षुश्च । 'तरक्षुस्तु मृगादनः' इत्यमरः । स शल्यकं परिहृत्य—गत्वा जघान ॥

शल्यकः पुनरभूदधिशिप्रं
लोहिताक्ष इति[3] मत्स्यविशेषः ।
तीव्रकृष्णभुजगश्च बभूव
क्रूरकर्मरमिकः शिशुमारः ॥ ४३ ॥

४३ शल्यक इत्यादि । पुनः शल्यकः मरणं प्राप्तः । शललः अधिशिप्र—शिप्रानामधेयनद्याः । 'अव्ययीभावाटकरान्तादमपञ्चम्याः' (का रू I 455) इतिसूत्रेणाम् । रोहिताक्ष इति मत्स्यविशेषोऽभूत् । तीव्रकृष्णभुजगश्च तत्र क्रूरकर्म

1 °दुपहत्य ] 2 परिहृत्य T, P, Ar 3 रोहिताक्ष P

राशिक—क्रूरकर्माणि निष्ठुरकार्यं रसिकोऽनुरागपरः शिशुमारः—नक्रो बभूव। 'नक्रः कच्छपसस्थानः शिशुमारोऽम्बुमर्कटः' इति वैजयन्ती।

स तु मीनमवहन्तुमरातिं
पृष्ठतोऽतिजवतः[2] परिधावन्।
सोऽन्तरा[3] जलगता नृपकुब्जीं
प्रत्यवाप्य विलवासमनैषीत्॥ ४५॥

४५ तमित्यादि। अरातिं तं मीनमवहन्तुं, जवतः—शीघ्रात्, पृष्ठतः—पृष्ठे। सप्तम्यास्तस्। परिधावन्—शिशुमारः, अन्तरा—शिप्रानदीमध्ये, जलगतां नृपकुब्जीं प्रत्यवाप्य प्रतिपद्य, तां विलवासमनैषीत्। नयति स्म। द्विकर्मकम्॥

ईर्ष्यया स पुनरुज्जयिनीशो
धीवरैर्जलबिलादवकृष्य।
ग्राहवीरमथ घातयति स्म
छेदभेदपरिदाहविकल्पैः॥ ४६॥

४६ ईर्ष्ययेत्यादि। पुनरुज्जयिनीशः स यशोमतिः धीवरैः—जालोपजीविभिः जलबिलादवकृष्य ग्राहवीरं—शिशुमारं ईर्ष्यया स्वकीयकुब्जीमरणकरणवार्तासञ्जातकोपेन 'ईर्ष्या सपत्नीवास्ये स्यात् दोषारोपणकोपयोः' इति भागुरिः। छेदभेदपरिदाहविकल्पैः—छेदः खण्डनं, भेदः—विदारणं, परिदाहः—दहनं, तेषां विकल्पैः—सङ्कल्पनैः, घातयति स्म।

मृत्युना कवलितोऽजनि सोऽजा
तत्पुरान्तरजनङ्गमवाटे।
कर्मकोद्रवरसेन हि मत्तः
किं किमेत्यशुचिधाम न जीवः॥ ४७॥

४७ मृत्युनेत्यादि। मृत्युना कवलितः शिशुमारः, तत्पुरान्तरजनङ्गमवाटे—उज्जयिनीपुरबहिर्भागस्थितचाण्डालगेहे। 'वेश्मवाटं तु सदनं निकाय्यनिलयालयाः' इति विश्वप्रकाशः। अजा अजनि—बर्करी जाता बभूव। तथाहि—कर्मकोद्रवरसेन। कर्मैव कोद्रवः कोरदूषः तस्य रसेन मत्तो जीवः। 'कोरदूषस्तु कोद्रवः' इत्यमरः। किं किं अशुचिधाम—स्थानं, नैति—प्रयातीति यावत्॥

---

१ पृष्ठतः M, P, Ar २ सजवः M, P Ar ३ अन्तरा P, M Ar

लोहिताक्षमपि जालगृहीतं
निन्युरन्तिकचरा नरनाथम् ।
तं विभज्य तु यशोमतिरुच्चैः
श्राद्धकार्यमवदत् कुरुतेति ॥ ४८ ॥

४८. लोहिताक्षमित्यादि । जालगृहीतं लोहिताक्षनामधेयं मीनमन्तिकचराः–नरनाथसेवकाः, नरनाथं–यशोमतिं निन्युः । द्विकर्मकम् । यशोमतिस्तु तं लोहिताक्षं स्थूलकायं उच्चैर्विभज्य–विभागं कृत्वा, एकभागेन यशोधरस्य श्राद्धकार्यं कुरुतेति विप्रानवदत् ॥

तस्य मांसमवखाद्य च विप्राः
आशिषा दिवि यशोधरमूखुः[1] ।
नन्विहास्मि[2] शफरः क्व पुनर्द्यौ-
रित्यमन्यत स खण्डितमत्स्यः ॥ ४९ ॥

४९. तस्येत्यादि । विप्रास्तस्य मांसमवखाद्य भक्षयित्वा आशिषा च दिवि यशोधरमूचुः । स्वर्गे जनन्या सह यशोधरभूपः चिरं तिष्ठत्विति आशीर्वादेन कलितानि मङ्गलवचनानि विप्रा पठन्तीति सः खण्डितमत्स्यः जातिस्मरो भूत्वा, इहाहं शफरोऽस्मि मम द्यौः क्व इत्यमन्यत ॥

तं च मीनमतनुं वहति स्म
सैव वस्तकमजा निजगर्भे ।
यस्तृतीयजननेऽजनि तीव्रो
नीलनीरदनिभो[3] भुजगेन्द्रः ॥ ५० ॥

५०. तमित्यादि । (तया जनन्या सह–साकं) सैवाजा अतनुं मृतं तं मीनं च; निजगर्भे वस्तकं वहति स्म । यः तृतीयजनने तीव्रो नीलनीरदनिभः–प्रावृषिजाम्बुवाहसदृशो भुजगेन्द्रोऽजनि ॥

गर्भवासमपहाय स वस्त-
स्तारयौवनसमन्वितकायः[4] ।
अभ्यरंस्त निजयैव जनन्या
कातरस्मरशरग्लपिताङ्गः ॥ ५१ ॥

५१. गर्भेत्यादि । स वस्तः गर्भवासमपहाय तारयौवनसमन्वितकायः अजनि । तदुपरि कातरस्मरशरग्लपिताङ्गः–कातरः–त्वरितः, कातरश्चासौ स्मरश्च ।

१. रोहिताक्ष' P. २. 'मादुः P. ३. 'हास्ति T. ४. 'नीरज' P. ५. गर्भ' T. ६. 'समुन्नत' P.

तस्य शराः। तैः ग्लपिताङ्गः क्षतशरीरो भूत्वा, निजयैव जनन्या सह, अभ्यरंस्त-व्यरंसीत् ॥

तं तया रतिकृतं पुनरन्यो
बर्करस्त्वरितमेत्य जघान।
तीव्रशृङ्गशिखरक्षतकुक्षिं[2]
कोपसङ्क्रमकषायितचक्षुः[3] ॥ ५२ ॥

**५२. तमित्यादि**। तया जनन्या सह-साकं, रतिकृतं तं बस्तं कोपसङ्क्रमकषायितचक्षुः-कोपस्य संक्रमेण कषायिते रक्ते चक्षुषी यस्य सः। 'कटौ कषायो रुधिरे' इति विश्वः। तीव्रशृङ्गशिखरक्षतकुक्षिः-तीव्रं च तत् शृङ्गं च, तस्य शिखरमग्रं तेन क्षतकुक्षिं-क्षतपिचण्डं पुनरन्यो बर्करो बस्तः त्वरितमेत्य जघान॥

स्वान्त्यधातुरसवाहि स तस्या
गर्भधाम पुनरप्यधिशिश्ये।
तस्य कुक्षिविवरे परिवृद्धि-
र्भारिणी चिरमभूदनजथ्या[6] ॥ ५३ ॥

**५३. स्वेत्यादि**। अन्यबर्करशृङ्गक्षतकुक्षिबाधामृतः स बस्तकः स्वान्त्यधातुरसवाहि-स्वस्य बस्तस्यान्त्यधातु रसः शुक्रं वाहि-तमुद्वहत्। तस्या अजाया, गर्भधाम-गर्भगृहं, पुनरप्यधिशिश्ये। शेते स्म। 'शीङ्स्थासोऽधेराधारः' (शा. व्या. सू. I. iii. 123)। तस्य शुक्रस्य परिवृद्धिः अजायाः कुक्षिविवरे, अनजथ्या-अजाया अहिता अनजथ्या। 'थ्यो जावेः' इति हितार्थे थ्यप्रत्ययः। नञाक्षराविपर्ययः इति तत्पुरुषः। भारिणी भारवती चिरमभूत् ॥

भूपतिस्तु मृगयानधिगत्य[7]
दुर्मनाः स विपिनादथ[8] गच्छन्।
एकवारमविचारमविध्यत्
तामजस्त्रियमुदस्त्रमुखेन ॥ ५४ ॥

**५४. भूपतिरित्यादि**। मृगयानधिगत्य-आखेटनमधिगत्य, 'समासे भाविन्य नञः क्त्वायप्'। (cf. 'क्त्वोऽनञः ल्यः'; शा. व्या. सू. II. ii. 171) इति सूत्रेण समासपदस्यापि यप् प्रत्ययः। 'आखेटनं मृगव्यं स्यात् आखेटो मृगया स्त्रियाम्' इत्यमरः। विपिनादथ गच्छन्, दुर्मनाः भूपतिस्तु उदस्त्रमुखेन

१. तीक्ष्ण॰ P, T. २. ॰कुक्षि P, Ar. ३ ॰संभ्रम॰ M. ४. ॰नेत्रः P. ५. पुनर॰
६. ॰दनजर्या T, दजजन्या. P. ७. ॰गत्या M, P. ८. ॰दव॰ M, P, Ar.; ॰दप॰ T, E.

अज्ञाप्रियं अविचारं यथा भवति तथा, एकवारं–सकृत्, अविध्यत्–गर्भविद्लनमकरोदिति यावत् ॥

अस्त्रवेधविवरच्युतमुच्चै–
श्छागशावमवलोक्य कृपालुः ।
भूपतिः श्वपचमेवमवोचत्
वर्धयैनमिति सोऽप्यववर्धत् ॥ ५५ ॥

५५. अस्त्रेत्यादि । अस्त्रवेधविवरच्युतं–अस्त्रस्यार्धचन्द्रबाणस्य अस्त्रं ' प्रतिरोपणः स्यादर्धचन्द्रः क्षुरपक ' इति विश्वप्रकाशः । वेधः–क्षतं, तस्य विवरं–छिद्रं, तस्मात् च्युतं उच्चैरुन्नतं छागशावमवलोक्य कृपालुः भूपतिः, श्वपचं–चण्डालं, त्वं वर्धय इति अवोचत् । सोऽपि तं छागशावमववर्धत्–पालयामास ॥

अन्यदा महिषबल्युपहारं
भूपतिः प्रतिनिवेद्य भवान्याः ।
निर्जिहिंस सवयःपरिवारः
स्वेच्छया वनगतो मृगयूथम् ॥ ५६ ॥

५६. अन्यदेत्यादि । सवयःपरिवारः–समं वयो येषां ते समवयसः परिवारा यस्य सः । समशब्दस्य सभावः, सवयःपरिवारो भूपतिः भवान्याः चण्डमार्याः, महिषबल्युपहारं–' लुलायो महिषः ' इत्यमरः । महिषाणां बलिः–पूजा । ' करोपहारयोः पुंसि बलिः प्राण्यङ्गजे स्त्रिया'मित्यमरः । स एव उपहारपुष्पाञ्जलिः, तं प्रतिनिवेद्य–प्रतिज्ञां कृत्वा, स्वेच्छया वनगतः सन्, मृगयूथं निर्जिहिंस–जघान । ' हिस् हिंसाया'मिति धातुः ॥

तन्मृगव्यपरितोषविवृद्ध्या
चण्डिकां महिषघातमयाक्षीत् ।
माहिषं तु पिशितं द्विजतृप्त्यै
कर्मिणो रसवतीं प्रतिनिन्युः ॥ ५७ ॥

५७. तदित्यादि । स राजा तन्मृगव्यपरितोषविवृद्ध्या चण्डिकां महिषघातं–महिषाणां वृन्दं हत्वा । णमुल् । अयाक्षीत् । पूजयामास । ' यजि देवपूजासङ्गतकरणदानेषु ' इति धातो लुङ् । कर्मिणः–पाचकाः । माहिषं पिशितं रसवतीं–महानसं ' समानौ रसवत्यां तु पाकस्थानमहानसे ' इत्यमरः । द्विजतृप्त्यै प्रतिनिन्युः । द्विकर्मकम् ॥

---

१. 'मेन' M. २. वर्धय त्व' M. ३. परिणिन्युः T.

आतपे प्रवितर्त तदवेक्ष्य
शोपणार्थमवदन्निति विप्रा ।
श्राद्धकर्माणि न योग्यमिद यत्
काककुक्कुरगृहीतमपूतम् ॥ ५८ ॥

५८ आतप इत्यादि । शोपणार्थ आतपे प्रवितत तत्पिशित अवेक्ष्य, विप्रा. काककुक्कुरगृहीतमपूत यदिद मांस श्राद्धकर्माणि न योग्यमित्यवदन् ॥

किंतु वस्तमुखचुम्बितमेतत्
सर्वत सपदि शुद्ध्यति मासम् ।
एवमेव खलु धर्मविचारे
नारदादिमुनय प्रवदन्ति ॥ ५९ ॥

५९ किमित्यादि । किंतु विशेपोऽस्ति । एतन्मास सपदि वस्तमुखचुम्बित—अजयोनिजनितवर्करमुखचुम्बित चेत् । सर्वत शुद्ध्यति । तथाहि—एवमेव धर्मविचारे नारदादिमुनय वस्तमुखचुम्बितमास पवित्रमिति प्रवदन्ति खलु ॥

तद्वचासि परिभाव्य स राजा
[illegible] जनगमगृहादजपोतम् ।
आनिनाय परिशुध्यति तस्मिन्[1]
सूपकृत् सरसमासमपाक्षीत् ॥ ६० ॥

६० तदित्यादि । राजा तद्वचासि—तेषा विप्राणा वचासि परिभाव्य—अङ्गीकृत्य । जनगमगृहात् अजपोत आनिनाय । तेन स्पर्शिते तस्मिन् मासे परिशुध्यति सति । तन्मास सूपकृत्—पाचक , अपाक्षीत्—पाक कृतवान् ॥

तद्यथेष्टमवखाद्य[4] सहान्न
ब्राह्मणा वचनमित्थमवोचन् ।
स्वर्गतस्तु सुचिर सह मात्रा
तृप्तिमृच्छतु[5] यशोधरभूप ॥ ६१ ॥

६१ तदित्यादि । ब्राह्मणा सहान्न अन्नेन सह तन्मास । 'सहस्यां कालेऽव्ययीभावे' (शा व्या सू II ॥ 111) इति सूत्रेण सहान्नमिति । यथेष्टम्—इष्टमनतिक्रम्य, अवखाद्य—भक्षयित्वा । इत्थ वचनमवोचन् । यशोधरभूपो मात्रा सह स्वर्गत —स्वर्गे, 'सप्तम्यास्तस्' । सुचिर तृप्ति ऋच्छतु ॥

---

१ °गृहाच्छम° P, Ar २ परिशोध्य M P Ar ३ तु तन् M P Ar ४ °लिह्य P ५ °मृच्छति T, E.

विप्रवाचमवधार्य स बस्त-
श्चेतसीदमकृत स्मृतजातिः ।
सोऽहमस्मि हि यशोधरनामा
पुत्र एष मम भूपतिरास्ते ॥ ६१ ॥

६१. विप्रवाचमित्यादि । स बस्तः–बर्करः, विप्रवाचमवधार्य, द्विजवचनं धारयित्वा । स्मृतजातिः–जातिस्मरो भूत्वा । मनसि इदमकृत । यशोधरनामा सोऽहमस्मि । एष भूपतिर्मम पुत्रः सुखेनास्ते । शर्मणा तिष्ठति ।

एष मे परिजनः सकलोऽपि[1]
मञ्जिवासपुरमुज्जयिनीयम् ।
रत्नमन्दिरमिदं मम देवी
यत्र मामिह जघान[2] विषेण[3] ॥ ६२ ॥

६२. एष इत्यादि । एष सकलोऽपि मे परिजनः इयमुज्जयिनी मञ्जिवासपुरम् । इदं मम रत्नमन्दिरं; यत्र रत्नमन्दिरे इह–अस्मिन् प्रदेशे । देवी बन्धकी अमृतमती, विषेण–गरलमिलितलड्डुकनिकरेण, मां जघान मारितवती ॥

सा पुनः क्व वनिता न मयासौ
दृश्यते मनसि यत्नवतापि[4] ।
जारमन्दिरगता रमते नु[5]
मृत्युवासमगमन्नु[6] न जाने[7] ॥ ६३ ॥

६३. सेत्यादि । सा–सा वनिता अमृतमती क्व, पुनः मनसि यत्नवता मयापि न दृश्यते । जारमन्दिरगता गजशालायामष्टवङ्कावासं गता सती तेन हस्तिपकेन साकं रमते वा, मृत्युवासमगमद्वा–यमालयमगच्छद्वा न जाने हि–नावगच्छामि ॥

छागजन्मनि वसन्नहमद्य
घोरदुःखमिह सोऽनुभवामि ।
एष घोषयति मां तु द्विविष्ठं[8]
ब्राह्मणैर्नरपतिः पितृभक्त्या ॥ ६४ ॥

६४. छागजन्मनि इत्यादि । सोहं पूर्वमेव भूपालो भूत्वा रागरससागरलग्नो भवामि स्म । इदानीमिह छागजन्मनि–अजजनुषि वसन् अद्य घोरदुःखमनुभवामि । एष नरपतिर्यशोमतिः पितृभक्त्या मां द्विविष्ठं–'गोऽम्बाम्बसव्याप-

---

१. हि M. २. विषण M. ३ जधान M. ४. यमवताऽपि P.
५. वा M. ६ °म M, P. Ar. ७. हि M, P, Ar. ८. द्विविस्थं T; दिवःस्थं M.

द्वित्रिभूम्यग्निमजिपुजिशेकुशकुकगुवर्हिर्दिवि परमेष्ठ ' (शा व्या सू II III 145) इति सूत्रेण एक पद, अलुक्समास ।

इत्यनुस्मृतिसहस्रनिबद्धं
दु खमुद्वहति वर्करवर्ये[1] ।
सापि[2] तस्य जनिकाधिकलिङ्ग-
मुद्बभूव विषमा हि लुलाय[3] ॥ ६६ ॥

६६ इतीत्यादि । वर्करवर्ये बस्तोत्तमे इत्यनुस्मृतिसहस्रनिबद्ध दु ख मुद्वहति सति तस्यास्य सा जनिका–यशोमती बाणविदलितकुक्षिवेदनया मरण प्राप्ता । माता अजा अधिकलिङ्ग कलिङ्गदेशे विषमो लुलाय –कासर उद्बभूव–जातो हि ॥

वाहयन्नतिभरावहपृष्ठ
त वरिष्ठवपुष वणिगीश ।
उज्जयिन्युपवने निजसार्थं
वर्त्मखिन्नमथ वासयति स्म ॥ ६७ ॥

६७ वाहयन्नित्यादि । अतिभरावहपृष्ठ–अत्यन्तभरावपृष्ठ, अत्यन्तभार वहनपटुतरशरीरचर्म, वरिष्ठवपुष–गुरुतरकलेवर, त लुलाय–महिष वाहयन् पृष्ठे भाराक्रान्तारकूटपूरपूरितगोणीनिक्षेपण कृत्वा पुरोगामिनं कुर्वन् वणिगीश –वणिग धिपति अथ–अनन्तर, उज्जयिन्युपवने वर्त्मखिन्न–मार्गपरिश्रान्त, निजसार्थं– स्वकीयसङ्घ । ' सङ्घसार्थौ तु जन्तुभि ' इत्यमर । वासयति स्म–शिबिरं कारयति स्म ॥

भूरिवारमवगाह्य तु शिप्रा
सैरिभ श्रमभराद्विचरन्[4] स[5] ।
वारिभुक्तमवधीत्तुरगेन्द्र
राजहसमवनीपतिवाह्यम् ॥ ६८ ॥

६८ भूरीत्यादि । स सैरिभ श्रमभरात् शिप्रां–शिप्राख्यां नदीमवगाह्य– उपगम्य, तत्र विचरन्–स्थित , वारिभुक्त–जलपानाय मन्दुराया आगत अवनी पतिवाह्य–यशोमते आरोहणयोग्य राजहस–राजहसनामधेय तुरगेन्द्र–तुरगराजम्, अवधीत् ' अद्यतन्या च ' (का व्या सू III IV 83) इति सूत्रेण हन्तेर्लुङि वधिरादेश । जघानेति यावत् ॥

---

१ °मुख्य P २ सोऽपि P ३ जरत्र P, Ar ४ मराप्तत° P
५ विहरत् P₁ विहरन् M A°

कोपतो नरपतिर्वणिजः स्वं
सारभूतमवलुप्य समस्तम् ।
तं लुलायमहरत्तरसा वै
चित्रकर्मविधिना विजिघांसुः ॥ ६९ ॥

६९. कोपत इत्यादि । नरपतिस्तु राजहंसनामधेयतुरगमरणसंश्रवणेन सञ्जातकोपतः, वणिजः–श्रेष्ठिनः सारभूतं समस्तं वस्तुसन्दोहं अवलुप्य–स्वीकृत्य, तदुपरि तं लुलायं, तरसा–बलात्कारेण द्रविणं । 'तरः सहोबलवीर्याणी'त्यमरः । चित्रकर्मविधिना–आश्चर्यकृत्यविधानेन, विजिघांसुः–विशेषेण हन्तुमिच्छुः सन्, अहरत्–आनयति स्म ॥

कीलितेषु चरणेषु चतुर्षु
क्षारवारिपरिशोषितकुक्षिम् ।
ऊर्ध्वजानुमदहन्नृपभृत्या-
स्ते कृपाविरहिणो महिषं तम् ॥ ७० ॥

७०. कीलितेषु इत्यादि । चतुर्षु चरणेषु कीलितेषु सत्सु, चत्वारि चरणानि कीलैर्युक्तानि कृत्वा, कृपाविरहिणः–अकृपालवः, ते नृपभृत्या क्षारवारिपरिशोषितकुक्षिं–लवणमिलितोष्णोदकेन संदाहितपिचण्डं ऊर्ध्वजानुं–ऊर्ध्वजं 'ऊर्ध्वज्ञुरूर्ध्वजानुः स्यादि'त्यमरः । तं महिषं अदहन् दहन्ति स्म ॥

पक्वभागमवकृत्य पुरस्तात्
दत्तमाशु परिखाद्य तदीयम् ।
इत्यवोचत यशोमतिमाता
नास्त्यनेन मम चेतसि तृप्तिः ॥ ७१ ॥

७१. पक्वभागमित्यादि । यशोमतिमाता अमृतमती । तदीयं कुलायसम्बन्धि । पुरस्तात् पक्वभागं आशु–झटिति दत्तं मांसं परिखाद्य भक्षयित्वा । अनेन मांसेन मम चेतसि तृप्तिः साहित्यं नास्तीत्यवोचत् ॥

किंतु मे रसवतीविधृतस्य
वस्तकस्य परिखण्डितमूरुम् ।
यच्छतेति मनुजाः पुनरेवं
चक्रुरेवमवदन्नपि चेटयः ॥ ७२ ॥

७२. किन्त्वित्यादि । किन्तु विशेषोऽस्ति । रसवतीविधृतस्य–रसवत्यां महानसे विधृतस्य–वस्तकस्य, बर्करस्य, परिखण्डितमूरुं विश्लिष्टसक्थिम् । 'सक्थि

१ 'नृप' P.

क्लीबे पुमानुरुरि'त्यमरः, मनुजाः-भो भृत्याः, मे-मह्यम्। 'पदात्-वाक्यस्य धस्मसा' (का. व्या. सू. ?) इत्यधिकारसूत्रेण ते मे इति पदस्यापि चतुर्थी विभक्तिः (cf. का. रू. I. 368)। यच्छत-वितरत। 'दाणेर्यच्छ' इति 'दाण् दाने' इति धातोः लोटि मध्यमपुरुषबहुवचनम्। इत्युक्तवत्यै अमृतमत्यै एवं चक्रुः-दत्तवन्तः। एतत् दृष्ट्वा वेद्यः इत्यवदन् वदन्ति स्म॥

पूतिगन्धि बहुभिर्व्रणरन्ध्रैः
क्लिन्नमङ्गमधुनामृतमत्याः।
किंनिमित्तमथवेयमजस्रं
मांसमत्ति नितरां तदपथ्यम्॥ ७३॥

७३. पूतिगन्धीत्यादि। अधुना बहुभिः व्रणरन्ध्रैः क्लिन्नं अमृतमत्याः अङ्गं पूतिगन्धि 'सूत्पूतिसुरभेर्गन्धादिद्गुणे' (शा. व्या. सू. II. 1 204) इति सूत्रेण इकारान्तः। अथ वा-तथापि, इयममृतमती तदपथ्यं-तस्याङ्गस्य अपथ्यं मांसं किंनिमित्तं नितरां अजस्रं-अनवरतं अत्ति॥

कर्म दुष्टमनया कृतमुच्चैः
तद्विपाकिमिमिदं फलमल्पम्।
वेद्यते पुनरिहैव हि साक्षात्
कर्म तीव्रपरिणामनिबद्धम्॥ ७४॥

७४. कर्मेत्यादि। अनया अमृतमत्या दुष्टं कर्म उच्चैः कृतम्। इदं तद्विपाकिमं फलमल्पम्। पुनरिहैव तीव्रपरिणामनिबद्धं कर्म साक्षादस्माभिः वेद्यते-विज्ञायते॥

अष्टवङ्कमगमन्निशि जारं
मारतुल्यमवमुच्य निजेशम्।
मृत्युलोकमनयत् सह मात्रा
भूमिवल्लभमियं हि विषेण॥ ७५॥

७५. अष्टवङ्कमित्यादि। इयममृतमती मारतुल्यं निजेशमवमुच्य मदनसदृशस्वकान्तं यशोधरं त्यक्त्वा, निशि-रात्रौ, अष्टवङ्कं-अगमत्, हस्तिपकं अगच्छत्। तदुपरि भूमिवल्लभं-यशोधरभूपालं मात्रा सह चन्द्रमत्या साकं, विषेण-गरलमिलितमोदकवृन्देन मृत्युलोकं-मरणं, अनयत्। द्विकर्मकम्॥

---

१. तद्विपाकज° P. २. अष्टभ° T, अष्टव्ङ° A. ३. °वाम° P, Ar.

इत्युपालंवचने निकटस्थे
चेटिकासदसि खण्डितबस्तः।
इत्यमन्यत निरीक्ष्य निजस्त्रीं
क्रोधतो घुरुघुरायितघोणः ॥ ७६ ॥

७६. इतीत्यादि। निकटस्थे-समीपस्थे, चेटिकासदसि-किंकरीसभायां, 'स्त्रीनपुंसकयोः सदः' इत्यमरः। इत्युपालवचने सति सः खण्डितबस्तः-खण्डितोरुस्स बर्करः निजस्त्रीममृतमतीं, निरीक्ष्य अवलोक्य, क्रोधतो घुरुघुरायितघोणः-कोपात् घुरुघुरेत्याचरितनिजनासिकः सः इत्यमन्यत ॥

तादृशं तु[1] कुलटे वपुरेतत्
किंनिमित्तमभवत् परिशीर्णम्।
सत्यमेव स पतिस्तव कुष्ठी
तत्समागमकृतेयमवस्था ॥ ७७ ॥

७७. तादृशमित्यादि। भो कुलटे बन्धकि, तव तादृशं एतत् रम्यं वपुः, किंनिमित्तं-किंकारणं, परिशीर्णं-विशेषेण दारितं अभवत्। तव स पतिरष्टवङ्कः सत्यमेव कुष्ठी-श्वित्रतनुः, इयमवस्था तत्समागमकृता ॥

किं न ते मनसि शाम्यति कोपः
तन्वि मय्युपहतेऽपि विषेण।
कासरास्रपरिखाद[2]मतृप्ता
यन्मदूरुमपि खादसि गृद्ध्या ॥ ७८ ॥

७८. किमित्यादि। तन्वि, भो कृशाङ्गि, मयि विषेण उपहते सति, ते-तव मनसि कोपः किं न शाम्यति। कासरास्रपरिखादं-लुलायपिशितं खादयित्वा। णमुल्। 'अस्रं तु पिशितं मांसं पललं क्रव्यमामिष'मिति व्याडिः। अतृप्ता-तृप्तिरहिता त्वं गृद्ध्या अभिलाषेण। 'गृद्ध्नोऽभिलाषुकस्तृष्णागि'त्यमरः। मदूरुमपि-ममोरुमपि, सक्थ्यपि, खादसि-अत्सि। खाद भक्षण इति धातोर्लट् मध्यमपुरुषैकवचनम् ॥

इत्यनुस्मृतिकरः स च बस्तः
सोऽपि दग्धमहिषश्च दिनेषु।
भक्षितौ विजदत्तुर्नृपमात्रा
जीवितव्यमथ किं विदधाताम् ॥ ७९ ॥

७९. इतीत्यादि। इत्यनुस्मृतिकरः स बस्तः-इति चिन्तितान्तःकरणपरः स बर्करः सोऽपि दग्धमहिषश्च, दिनेषु-प्रतिदिवसेषु नृपमात्रा-अमृतमत्या, भक्षितौ।

१. इत्युरात्[°] A. २. न P. ३. °परिखाद[°] P,[°] परिखाय[°] Ar.

जीवितव्यं–असुं, विजहतुः–परित्यक्तवन्तौ । अथ–कात्स्न्यें–कष्टं; 'मङ्गलानन्तरारम्भप्रश्नकात्स्न्र्येष्वथो अथ' इत्यमरः । किं विदधातां–किं कुरुताम् ॥

तौ विमुच्य तनुमार्तमनस्कौ
कर्मणा बलवता ह्युपनीतौ ।
तत्पुरे श्वपचवेश्मनि कृच्छ्रे
कुक्कुटौ समसुपाजनिषाताम् ॥ ८० ॥

८०. तावित्यादि । आर्तमनस्कौ–आर्तहृदयौ, बलवता कर्मणा, उपनीतौ–प्रापितौ तौ अजमहिषौ तनुं–शरीरं, विमुच्य तत्पुरे–तच्च, तत्पुरं च, तस्मिन् उज्जयिनीनगरे, कृच्छ्रे–कष्टे, श्वपचवेश्मनि–चण्डालगेहे, कुक्कुटौ समं–युगपत् । 'सकृत् समं च युगपत्' इति व्याडिः । उपाजनिषातां जातौ हि । 'दीपजनबुधपूरितायिप्यायिभ्यो वा' इति सूत्रेण 'जनिङ् प्रादुर्भावे' इति धातोर्लुङ् ॥

अथ तौ प्रसङ्गपरिलोकितावुभा–
वुपनीय दर्शयति चण्डकर्मणि ।
तनयाविव त्वमभिवर्धयादरा–
दिति तं जगाद नृपतिर्यशोमतिः ॥ ८१ ॥

८१. अथेत्यादि । प्रसङ्गपरिलोकितौ सेवकजनाह्वानसमयसमवलोकितौ तौ ताम्रचूडौ उपनीय चण्डकर्मणीति ग्रामरक्षके राजानं दर्शयति सति यशोमतिर्नरपतिः, तनयौ इव–स्वपुत्रौ इव, आदरात् त्वं अभिवर्धय इति चण्डकर्माणं जगाद । इदं मञ्जुभाषिणीति वृत्तम् ॥

तरलनयनौ तारश्यामैः पतत्रपरिच्छदै–
र्वयसि दधतौ चूडारत्नं जपाकुसुमच्छवि ।
कनकनिकषच्छायाचौर्योल्लसच्चरणाङ्कुरौ
सुखमवृधतां तौ तद्वासे सुपञ्जरवासिनौ[1] ॥ ८२ ॥

८२. तरलेत्यादि । तद्वासे तौ चण्डकर्मसदने, तारश्यामैः उज्ज्वलमेचकैः, पतत्रपरिच्छदैः–पतत्राणां तनूरुहाणां परिच्छदैः–परिकरैः उपलक्षितौ, तरलनयनौ चञ्चललोचनौ । वयसि–यौवने सति, जपाकुसुमच्छवि–रुद्रपुष्पनिभाभं चूडारत्नं–शिखामणिम् । 'शिखा चूडा शिखण्डस्तु' इत्यमरः । दधतौ–बिभ्रतौ । सुपञ्जरवासिनौ, कनकनिकषच्छायाचौर्योल्लसच्चरणाङ्कुरौ–कनकस्य निकषः–शाणः । 'शाणस्तु निकषः कषः' इत्यमरः । तस्य छाया–कान्तिः । 'छाया

---

१. *cd* are read as *dc* in M, P, A, & Ar. २. °वासितौ T, P.

सूर्यप्रिया कान्तिः प्रतिबिम्बमनातपः' इत्यमरः । तस्याः चौर्यं-स्तेयं, तेन उल्लसन् चरणयोरङ्कुरो ययोस्तौ । तौ ताम्रचूडौ सुखं यथा भवति तथा अवृधतां-ऐधिषाताम् । इदं हरिणीवृत्तम् ॥

कुर्वन् कार्यबृहस्पतिप्रभृतिभिः संदर्शितं मन्त्रिभिः [1]
संतृप्यन्नमृतेन कल्पविधिना श्रीवैद्यविद्यार्णवैः ।
व्यातन्वन् जयसिंहतां रणमुखे दीर्घं दधौ धारिणीं
राजा सोऽपि यशोमतिः प्रविलसत्साम्राज्यलक्ष्मीपतिः ॥८३॥

इति श्रीवादिराजविरचिते यशोधरचरिते महाकाव्ये तृतीयः सर्गः ।

८३. कुर्वन्नित्यादि । प्रविलसत् साम्राज्यलक्ष्मीपतिः-प्रविलसत् राजत्, साम्राज्यं-'शास्ति यश्चाज्ञया राज्ञः स सम्राडि'त्यमरः । सम्राजो भावः साम्राज्यं, प्रविलसच्च तत् साम्राज्यं च प्रविलसत् साम्राज्यं, तस्य लक्ष्मीः-संपत्, तस्याः पतिः सोऽपि राजा यशोमतिः, कार्यबृहस्पतिप्रभृतिभिः-कार्ये विचारयोग्यकर्मणि बृहस्पतिः सुराचार्यवत् मुख्यैः-श्रेष्ठैः मन्त्रिभिः अमात्यैः, सन्दर्शितं-विचारितं कृत्यं कुर्वन् । श्रीवैद्यविद्यार्णवैः-श्रीमती चासौ वैद्यविद्या च श्रीवैद्यविद्या, तस्याः अर्णवैः सागरैः चिकित्सकैः कल्पविधिना-पाकविधानेन अमृतेन पीयूषनिभेन आहारेण । 'अमृतं दिवि से मोक्षे यज्ञशेषेऽमराशने । आहारे सलिले' इति व्याडिः । संतृप्यन्-तृप्तिं कुर्वन् । रणमुखे सङ्ग्रामशिरसि 'मुखमास्याग्रमूर्धसु' इति विश्वः । जयसिंहतां जय-श्रेष्ठतां । 'सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थगोचराः' इत्यमरः । व्यातन्वन् कुर्वन् । दीर्घं-चिरं । धारिणीं-धरित्रीं । दधौ-बभार । भुवनं पालयति स्मेति यावत् । इदं शार्दूलविक्रीडितम् ॥

इति श्रीवादिराजकृत-यशोधरनामधेय-महाकाव्य-टीकायां लक्ष्मणकृतायां तृतीयस्सर्गः ।

---

१. This verse is omitted by P. B, E, and M support the text; but T reads *aled* as *bal*1. २. काव्य° T. ३. °महस्पति° E, B, Ar.

## चतुर्थः सर्गः

अथैकदासौ नृपतिर्मधूत्सवे
वने प्रवृत्ते कुसुमावलीसखे[1] ।
मुदा तदात्मानमिवावलोकितुं
जगाम विस्तारितहृद्यसौरभम् ॥ १ ॥§

श्रीवादिराजं यतिमानमामि यदीयवाग्वज्रनिपातनेन ।
समन्ततो वादिधराधरास्ते विचूर्णितास्तूर्णमुदारपक्षाः ॥

१. अथेत्यादि । तदा असौ नरपतिः, वने—कान्तारे उपवने वा । 'आरामविपिने वने' इति विश्वः । अधिकरणे कुसुमावलीसखे कुसुमानामावलिः पङ्क्तिः तस्याः सखा सुहृत्, तस्मिन् । मधूत्सवे प्रवृत्ते—प्रवर्तमाने सति 'राजन् सखी'ति सूत्रेण सखिशब्दस्यादन्तता । ( cf. का. व्या. सू. II. vi. 41 ) विस्तारितहृद्यसौरभं सुरभेर्भावः सौरभं सुगन्धः, 'सुरभिर्घ्राणतर्पणः' इत्यमरः । विस्तारितं—विस्तृतं । विस्तारो विस्तरो व्यासः । सौरभं यत्र तत् । तद्वनं मुदावलोकितुं—अवलोकनाय । जगाम । आत्मानमिव—कायमिव । 'आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्म वर्ष्म च' इत्यमरः । कायः कीदृशः ? विस्तारितहृद्यसौरभः । विस्तारितं हृद्यं सौरभं यस्य सः, तं । मधूत्सवोऽप्यात्मसमः । कथं ? सोऽयं राजा तु कुसुमावलीसखः कुसुमावलीनामधेयस्य कलत्रस्य सखा; सुहृत् वल्लभ इति यावत् । इदमपि वंशस्थं वृत्तम् ॥

उपेयुषस्तस्य वनं मधुश्रिया
कलक्वणत्कोकिलकण्ठनादया ।
अकथ्यत स्वागतमुर्वरापते-
र्ध्रुवं नवीनोद्गमसुभ्रहासया[2] ॥ २ ॥

२. उपेयुष इत्यादि । वनमुपेयुषः तत्क्रीडावनं गच्छतः तस्य उर्वीपतेः यशोमतेः, कलक्वणत्कोकिलकण्ठनादया—कलं यथा भवति तथा । 'कलो मन्द्रस्तु गम्भीरे' इत्यमरः । क्वणन्तश्च ते कोकिलाश्च क्वणत्कोकिलाः, तेषां कण्ठनादो

---

१. 'सखी P. २. तमा' A. § The Ms Ar. breaks off here.

यस्याः सा, तया नवीनोद्गमशुभ्रहासया नवीनानि इमानि उद्गमानि च नवीनोद्गमानि। वसन्तागमनहर्षे सञ्जातमल्लिकादिनूतनपुष्पाणि । 'पुष्पं तु सुमनस्संघः स्तान्तं प्रसवोद्गमम्' इति ( Printed edn reads–पुष्पं सुमनसः पुल्लं स्तान्तं, प्रसवोद्गमौ ) धनञ्जयः । तान्येव शुभ्रः–धवलः हासः यस्याः सा, तया । मधुश्रिया–वसन्तलक्ष्म्या । स्वागतं–क्षेमवार्ताम् ।

> निकामतन्व्यः प्रसवैः सुगन्धयः
> तरां दधानास्तरलप्रवालताम् ।
> इतस्ततो जग्मुरिलापतेः स्त्रियो
> लतास्तु नै स्थावरतां वितत्यजुः ॥ ३ ॥

३. निकामेत्यादि । अत्यर्थं कृशाङ्ग्यः, प्रसवैः–कवरीभरनिक्षिप्तकुसुमैः । 'स्यादुत्पादे फले पुष्पे प्रसवो गर्भमोचने' इत्यमरः । सुगन्धयः–परिमलपरिकलिताः । तरलप्रवालताम् दधानाः कम्पमानविद्रुमाभरणतां दधानाः । इलापतेः यशोमतेः । स्त्रियः इतस्ततो जग्मुः–नूतन (पूत) पुष्पफलावलोकनसञ्जातकाङ्क्षया सर्वतः प्रसस्रुः । एताभिरुद्दत्ता लतास्तु निकामतन्व्यः–नितरां मृदुस्वरूपाः प्रसवैःस्सुगन्धयः, तरलप्रवालतां–चञ्चलकिसलयतां दधाना इतस्ततः सर्वतोऽपि, स्थावरतां–स्थास्नुतां, न तत्यजुः–न त्यक्तवत्यः ॥

> उपस्थिते पुष्पसमृद्धिविप्लवे
> भयादिवाकम्पि मरुद्वशैर्द्रुमैः ।
> अनल्पसंवासकृतः कृतस्वनाः
> प्रपद्य तानन्वरुदन्निवालयः ॥ ४ ॥

४. उपस्थित्यादि । पुष्पसमृद्धिविप्लवे–पुष्पाणां समृद्धिः–सम्पत्, तस्याः विप्लवे–बाधायां उपस्थिते समुपगतायां मरुद्वशैः–मरुतः–वायोः; 'मरुतौ पवनामरौ' इत्यमरः । वशीभूतैः, द्रुमैः–तरुभिः, भयादिव अकम्पि–'कपि चलने' इति धातौ भावे लुङ् । तावत् संपूर्णत्वेन । 'यावत्तावच्च साकल्ये' इत्यमरः । अनल्पसंवासकृतः–बहुकालवासकारिणः, कृतस्वनाः, अलयः–भ्रमराः, तान्–तरून्, प्रपद्य–आलिङ्ग्य अरुदन्निव–रोदनं कृतवन्त इव ॥

---

१. तया P. २. °स्तरव T. ३. °स्तास्तु P. ४. °विप्लवे P. ५. तान्व° T.

दुराक्रमास्तुङ्गतया च मानवैः
सुदूरमध्यारुरुहुर्लतास्तरून् ।
तदग्रभागे कुसुमश्रियः स्वयं
निवासरक्षामिव कर्तुमिच्छव ॥ ५ ॥

५ दुराक्रमानित्यादि । लता–वीरुध, तुङ्गतया–उन्नतत्वेन, मानवैः दुराक्रमान्–आरोढुमशक्यान्, तरून् अध आरुरुहुः–अध रोहणं कुर्वन्ति स्म । किमर्थम्? तदग्रभागे–तेषां तरूणां शिरःप्रदेशे, कुसुमश्रियः–पुष्पसम्पदः, निवासरक्षां–आवासपालनं, कर्तुमिच्छव इव ॥

निगृह्य शाखासु नितम्बिनीजने
प्रसूनगुच्छानवलूय चिन्वति ।
मधुव्रतानां ध्वनिरुत्थितोऽभवद्
प्रवेदनाध्वान इव द्रुमैः कृतः ॥ ६ ॥

६ निगृह्येत्यादि । नितम्बिनीजने–युवतिजने, शाखासु, प्रसूनगुच्छान्–पुष्पस्तवकान्, 'स्याद्गुच्छकस्तु स्तबकः' इत्यमरः । निगृह्य–खादयित्वा(?), अवलूय–उच्छेद्य, चिन्वति–सम्पादयति सति, द्रुमैः कृतः प्रवेदनाध्वान इव, मधुव्रतानां ध्वनिरुत्थितोऽभवत्–मधुकराणां निनदः सञ्जातः अभूत् । गुरुनितम्बभरा'हरित' (कलित?) वनिताक्रमणतो भग्नाः पुमांसः प्रकर्षेण वेदनया विश्वासतया ध्वनन्तीति भावः ॥

नतभ्रुवां केचिदनोकहा वने
प्रसूनशाखास्ववलम्बतां गता ।
ततः प्रभृत्युद्भविनो विरेजिरे
वराङ्गनालिङ्गितकल्पपादपाः ॥ ७ ॥

७ नतभ्रुवामित्यादि । वने, नतभ्रुवां–युवतीनां, प्रसूनशाखासु, कुसुमस्तवकसङ्कुलितशिखासु । अवलम्बतां दोलाभावं गताः, केचिदनोकहाः–तरवः । विरेजिरे रेजुः । ततः प्रभृति–तदादि । उद्भविनः–उदयिनः, वराङ्गनालिङ्गितकल्पपादपा इव इवशब्दरहितोपमापि विद्यते । यदाह **सरस्वतीकण्ठाभरणे**–

रराज रामावदनं धरायां
परिस्फुरच्चारु हिरण्यगौरम् ।
नवोदितं पूर्णमृगाङ्कबिम्बं
क्षण (?) क्षपाया धरणीधरेन्द्रात् ॥

इति । तथा चोक्तम्–

१ 'मध्या' P, M, T २ 'रुद्धतो P, T, E ३ वराङ्गनाङ्का इव M P, T E.

शुकतुण्डच्छवि सवितु-
श्चण्डरुचेः पुण्डरीकवनबन्धोः।
मण्डलमधुना वन्दे
कुण्डलमाखण्डलाशायाः॥

प्रवालशय्यामधिशिश्यिरे मुदा
लतागृहे काश्चन वारयोषितः।
मधूत्सवासादितरागसम्पदा
समन्ततः पल्लविता इव क्षणे॥८॥[1]

८. प्रवालशय्यामित्यादि। काश्चन वारयोषितः लतागृहे मधूत्सवासादितरागसम्पदा-मधोः वसन्तस्य उत्सवार्थी, तेन; आसादितः सङ्गृहीतः-रागः अनुरागः तस्य संपत्-समृद्धिः यस्याः सा; तया। क्षणे-व्यापारवैकल्ये। 'क्षणो व्यापारवैकल्ये कालभेदाल्पकालयोः। उत्सवे परतन्त्रत्वे मध्यावसरपर्वसु॥' इति वैजयन्ती। प्रवालशय्यामधिशिश्यिरे-किसलयनिचयविरचिततले भूतले शेरते स्म॥

पुरो दधानः कुसुमावलीं प्रियां
प्रसूनतल्पे तरुमूलकल्पिते।
नृपः स रेमे परितोऽवधारयन्
वसन्तगीतं वनितामुखोद्गतम्॥९॥

९. पुर इत्यादि। तरुमूलकल्पिते प्रसूनतल्पे, कुसुमावलीं-कुसुमावलीति नामधेयां वल्लभां, पुरो दधानः-अग्रतो निधाय अवतिष्ठमानः स नृपतिः, वनितामुखोद्गतं वसन्तगीतं, परितोऽवधारयन् रेमे॥

विशोधयन् व्यालमृगान् सतस्करान्
स चण्डकर्मा परितो वनं तदा।
अकम्पनं नाम महामुनीश्वरं
ददर्श रम्यं तरुमूलमाश्रितम्॥१०॥

१०. विशोधयन्नित्यादि। तदा सतस्करान्-सचोरान्, व्यालमृगान्-दुष्टमृगान्। *'व्यालो दुष्टगजे सर्पे व्यालो व्याघ्रे प्रकथ्यते' इति विश्वः।* वनं परितो विशोधयन्, स चण्डकर्मा-चण्डकर्मनामधेयो नगररक्षकः रम्यं तरुमूलमाश्रितम्-अकम्पनं नाम महामुनीश्वरं, ददर्श॥

---

1. II omits this verse.

उपस्थितं साधुसमाधिचेतसा
मुनिं विनीतः स विनम्य पादयोः ।
अपृच्छदेव प्रतिपत्तुमिच्छया
करोति हि श्रेयसि भव्यतागुणः ॥ ११ ॥

११ उपस्थितमित्यादि । विनीतः स चण्डकर्मा– साधुसमाधिचेतसा साधुश्चासौ समाधिश्च साधुसमाधि, सम्यक् परमात्मावलोकनम् । 'समाधिः समतावस्था परमात्मावलोकने' इति विश्वप्रकाश ।तस्मिन् लग्नं चेत ,तेनोपस्थितं त मुनिमुपगम्य, तस्य पादयो विनम्य, प्रतिपत्तुमिच्छया–तत्समाधिं विज्ञातु काङ्क्षया । एवमपृच्छत् । वक्ष्यमाणप्रकारेण पप्रच्छ । तथा हि–भव्यतागुण श्रेयसि कल्याणार्थं, करोति–त्वरयति ॥

निमील्य नेत्रे स्थिरमासनं त्वया
निबध्नता किं भगवन् विचिन्तितम् ।
फलं च तच्चिन्तनया किमुच्यतां
न निष्फलं यच्चरितं भवादृशाम् ॥ १२ ॥

१२ निमील्येत्यादि । भो भगवन्, आसनं स्थिरं निबध्नता त्वया नेत्रे निमील्य–लोचने मुकुलयित्वा, किं विचिन्तितं तच्चिन्तनया फलं किं भवादृशां यच्चरितं निष्फलं न, तदुच्यतां–तत्स्वरूपं निरूप्यताम् ॥

अवोचदेवं मुनिरप्युदारधी–
रवेत्य भव्यं हृदि चण्डपाशिकम् ।
अयं मयात्मा सुविविच्य भावितो
भवप्रबन्धार्णवमुत्तितीर्षुणा ॥ १३ ॥

१३ अवोचदित्यादि । उदारधीः मुनिः, चण्डपाशिकं–चण्डकर्माणं हृदि–स्वकीयचेतसि भव्यमवेत्य, भवप्रबन्धार्णवं–भवस्य–जन्मनः प्रबन्धप्रकर्ष-बन्धनं, स एवार्णवं, तमुत्तितीर्षुणा उत्तर्तुमिच्छु उत्तितीर्षु, तेन । मया अयमात्मा, सुविविच्य–पृथक्कृत्य, भावितः विचारितः, इत्यवोचत ॥

---

१ तमुपेत्य P  २ साधु समाधि T

निशम्य चैतद्वचनं महामुनेः
स चण्डकर्मा पुनरित्यवोचत ।
तयोर्न भेदः खलु देहदेहिनो-
र्मयोह्यते विस्तरतोऽद्य तद्यथा ॥ १४ ॥

१४. निशम्येत्यादि । महामुनेः तद्वचनं निशम्य चण्डकर्मा पुनरित्यवोचत । तयोर्देहदेहिनोः—कायात्मनोः, (न भेदः । एवं) खलु अद्य विस्तरतः मया ऊह्यते—विचार्यते, एतत्कृत इत्यर्थः । तद्यथा ॥

निगृह्य चोरं तु निहत्य चोच्चकैः
कदाचिदेकं[1] परमाणुमात्रकम्[2] ।
मया हि[3] जीवः खलु नोपलक्षितः
पृथग्भवेच्चेत् किमु नोपलक्ष्यते[4] ॥ १५ ॥

१५. निगृह्येत्यादि । कदाचिदेकं चोरं निगृह्य—स्वीकृत्य, अवबध्येति यावत् । परमाणुमात्रकं उच्चकैः, निहत्य—छेदयित्वा, हि मया जीवः नोपलक्षितः । चोरेऽहं जीवं न पश्यामि स्मेति यावत् । पृथक्भवेच्चेत् किमु नोपलक्ष्यते ॥

तथान्यथा[5] तस्कर एव केवलं
प्रमाय पूर्वं तुलयाथ मारितः ।
तया पुनः संमित एव तत्प्रमः
पृथक् स चेदल्पतयावतिष्ठते ॥ १६ ॥

१६. तथेत्यादि । तथा—तेन प्रकारेण, जीवो नोपलक्षितः, अन्यथा-अन्येन प्रकारेण, पूर्वं तस्करं, केवलयैव तुलया प्रमाय, अथ—अनन्तरं, मारितः स चोरः । पुनस्तुलया संमित एव तत्प्रमः—पूर्वप्रमाणेनावतिष्ठते । आत्मा तत्र शरीरे वियते चेत्तर्हि तत् शरीरमल्पतयाऽवतिष्ठते । अत एव शरीरे जीवो न वियते इति यावत् ।

---

१. कदाचिदु° P, M. २. निहत्य चैकं P, M. ३. मयापि M.[!] ४. °च्चेति ममोप° T. ५. अथान्यथा M, P.

प्रवेश्य चौरं हि महत्कुसूलकं
विलिप्य लाक्षा बहिरप्यरन्ध्रकम्।
गते हि[1] काले ददृशे शरीरकं
न जीवमार्गस्तदलीकमुच्यते ॥ १७ ॥

१७ प्रवेश्येत्यादि। महत्कुसूलकं-धान्यनिक्षेपणार्थं विरचितं एद्रकरन्ध्र। कर्णाटभाषया "कणज"मिति वदन्ति जनाः। 'कुसूलकः . ' (?) इत्यमरः। चौरं प्रवेश्य, बहिरप्यरन्ध्रकं यथा भवति तथा लाक्षया जतुना। 'लाक्षा राक्षा जतु क्लीबे' इत्यमरः। विलिप्य विलेपनं कृत्वा, काले गते सति, शरीरकं-कुत्सितशरीरं। 'कुत्सार्थे कः' इति सूत्रेण कप्रत्ययः। शुष्कं शरीरं, ददृशे। जीवनमार्गो न ददृशे। शरीरे जीवो विद्यते इति यद्वचनं तदलीकमुच्यते॥

मुनिर्बभाषे शृणु चोत्तरत्रयं
तरौ कृशानुर्दलितेऽपि खण्डशः।
न दृश्यते सोऽरणिमन्थनादृते
तथा शरीरे समुपेहि[2] निश्चयम् ॥ १८ ॥

१८ मुनिरित्यादि। मुनिरकम्पनाचार्यः उत्तरत्रयं शृणु इति बभाषे-बभाण। अरणिमन्थनात् अन्यर्थं नीरसतरुखण्डकलमन्थनात्। ऋते-विना, 'पञ्चमी चर्ते' (शा व्या सू I iii 191) इति सूत्रनियमात् पञ्चमी। 'निर्मन्थ्यदारुणि त्वरणिर्द्वयो' इत्यमरः। तरौ खण्डशो दलिते सत्यपि, कृशानुः-अग्निः न दृश्यते, तथा शरीरे आत्मा विद्यते इति निश्चयं-निर्णयं समुपेहि-जानीहि। 'ओमाङि पर' इति नियमेन समुपेहीति वक्तुमपप्रयोगः।

प्रमाय भस्त्रां तुलया पुनश्च तां
प्रपूर्णवायुप्रमितां विलोकयन्[3]।
प्रमाणभेदोऽत्र न दृश्यते यथा
तयोः पृथक्त्वेऽपि तथैव निश्चितम् ॥ १९ ॥

१९ प्रमायेत्यादि। तुलया भस्त्रां प्रमाय, पुनश्च प्रपूर्णवातप्रमितां तां विलोकयन्, अत्र प्रमाणभेदो न दृश्यते यथा, तयोः पृथक्त्वेऽपि तथैव निश्चितं जानीहि।

---

१ च P २ समवेहि P, M, समुपैहि T, समवेहि E. ३ विलोक्य P.

प्रविश्य रोहं पुरुषेऽप्यरन्ध्रकं
धमत्यलं शङ्खमुदात्तनादकम् ।
ध्वनिर्बहिर्गच्छति नास्ति तत्पथ-
स्तथात्र मन्यस्व विचारपूर्वकम् ॥ २० ॥

२०. प्रविश्येत्यादि । पुरुषेऽपि, अरन्ध्रकं रोहं–रन्ध्ररहितं धान्यराशि-निक्षेपणार्थं रचितभमिखननं कर्णाटभाषया "हगव" इति वदति लोकः । तं प्रविश्य, शङ्खं–कम्बुं उदात्तनादकं यथा भवति तथा, अलं–अत्यर्थं, धमति सति, यथा ध्वनिः बहिर्गच्छति, तत्त्वतो नास्ति, तस्य पथः–तत्पथः, पथशब्दोऽकारान्तः कथं वा उपथश्रमाथश्चेति (?) त्रिकाण्डशेषः । यदाह धनञ्जयः—

पथश्रमं नेतुमपेतभारै-
र्विगाह्य हस्तेन विमुक्तमम्भः ।
विशीर्यमाणं...

इति । तस्य शङ्खस्य निनादसरणिः न विद्यते, अन्यत्र कायेऽपि भारपूरकमात्मा विद्यते इति जानीहि ॥

स कीदृशश्चेदयमुच्यते महा-
ननाद्यनन्तः स्वपरावबोधनः[1] ।
स्वतोऽन्यतश्चैव पुनः प्रतिक्षणं
विवर्तते हेतुफलात्मना क्रमात् ॥ २१ ॥

२१. स इत्यादि । सोऽयमात्मा कीदृशश्चेत्, तस्य स्वरूपमुच्यते; महान्–श्रेष्ठः, अनाद्यनन्तः–आद्यन्तरहितः, स्वपरावबोधनः–स्वमात्मानं, परं-स्वस्मात्परं अन्यं, तद्द्वयं अवबोधनो–ज्ञाता, स्वतः–स्वकायात्, अन्यतश्च–परकायाच्च, प्रतिक्षणं–अनवरतं, हेतुफलात्मना पुण्यपापकारणफलरूपेण पुनः विवर्तते–परिभ्रमति ॥

स एव कर्ता खलु पुण्यपापयोः
स एव भोक्ता सुखदुःखयोस्तथा ।
उपायसिद्ध्या परिभावितः पुनः
स एव तत्कर्ममलैर्विमुच्यते ॥ २२ ॥

२२. स एवेत्यादि । स एव आत्मा, पुण्यपापयोः कर्ता, खलुशब्दो वाक्यालङ्कारः । 'जिज्ञासानुनये खलु' इत्यमरः । स एवात्मा तथा सुखदुःखयो-

१. तन्पद° M. २. वान्यत्र M, P. ३. °बोधकः M; °भासकः T;-भासनः E. ४. °फलै° P.

भोक्ता खलु । उपायसिद्ध्या स एव परिभावित –चिन्तित स एवात्मा । तत्कर्म मलैः –तत् प्रसिद्ध । 'पक्षात्मनोरनिर्देशे प्रकृतामर्शने च तत्' इति वैजयन्ती । कर्माण्येव मलानि–किट्टानि, तैः विमुच्यते । 'मलोऽस्त्री पापविट् किट्टानि' इत्यमर ॥

प्रयोजनं तत्परिभावनाविधे
हिताववोधादहितस्य वर्जनम् ।
हितं तु सम्यक्त्वमिदं तनूभृता
प्रतीहि तेषामहितं विपर्ययम् ॥ २३ ॥

२३ प्रयोजनमित्यादि । तत्परिभावनाविधे –तदात्मध्यानविधानस्य हिताववोधादहितस्य वर्जनं प्रयोजनं प्रतीहि–जानीहि । तनूभृता इदं सम्यक्त्वं हितं, तेषां तनूभृतां । हितशब्दयोगे चतुर्थी वा भवति । 'भद्रायुष्यक्षेमसुखार्थहितार्थं हितैराशिषि' (शा व्या सू I iii 140) इति सूत्रादिकस्य । विपर्ययम् व्यत्ययात् । असम्यक्त्वमहितं जानीहि ॥

सरागसम्यक्त्वगुणप्रतैरयं
सदैव बध्नाति हि पुण्यमात्मनि ।
वदन्ति सम्यक्त्वममन्दमेधसो
रुचिं तु जीवादिपदार्थगोचराम् ॥ २४ ॥

२४ सरागेत्यादि । अयमात्मा, सरागसम्यक्त्वगुणव्रतै –अप्रत्याख्यानादि कषाययुक्तसम्यक्त्वगुणव्रतै आत्मनि पुण्यं बध्नाति अमन्दमेधस –अमन्दा मेधा येषां ते, सम्यग्स्फुटमतय , कोविदा इति यावत् । 'अल्पाच्च मेधाया ' (शा व्या सू II i 198) इति सूत्रेण समासयुक्तमेधाशब्दस्य सादेश । जीवादिपदार्थ गोचरां–जीवाजीवास्रवबन्धसंवरनिर्जरामोक्षा तत्त्वं, पुण्यपापे चेति नव पदार्था , तेषां गोचरा–विषया यस्य तां रुचि–श्रद्धा, सम्यक्त्वं वदन्ति ॥

अहिंसनं सत्यमचौर्यमुच्चकै
रकामसेवा विषयेष्वमूर्छनम् ।
व्रतानि पञ्चेति फलं त्वनुक्रमात्
विभज्य तेषामिति वर्ण्यते बुधै ॥ २५ ॥

२५ अहिंसनमित्यादि । अहिंसनं हिंसारहितत्वं, सत्यं सत्यवचनं, अचौर्यं अस्तेयं, 'चौरिकास्तैन्यचौर्यं च स्तेयम्' इति अमर । उच्चकै , अकामसेवा–ब्रह्मचारित्वं,

---

१ 'यमास्तत्र' (?) P   २ गुणव्रतै T

विषयेषु, अमूर्छनं-अनभिव्यापकत्वं, इति पञ्चव्रतानि। तेषां फलमनुक्रमाद्विभज्य-विभजनं कृत्वा बुधैः वर्ण्यते ॥

अहिंसनं वैरहरं परं[1] भवे-
त्तनोति सत्यं तदमोघवाक्यताम्।
अचौर्यमाकर्षति रत्नसंचयं
बलावहं ब्रह्मचरित्व[2]मूर्जितम् ॥ २६ ॥

२६. अहिंसनमित्यादि। अहिंसनं, प्राणिहननपरिहरणपरं निष्कामं। 'परं दूरान्यमुख्येषु परोऽरिपरमात्मनोः' इति वैजयन्ती। वैरहरं भवेत्, तत् सत्यं अमोघवाक्यतां करोति। अचौर्यं-स्तेयरहितत्वं रत्नसञ्चयमाकर्षति। ब्रह्मचरित्व-मूर्जितं-श्रेष्ठं बलावहं-बलकरणम् ॥

भवस्य पूर्वापरकोटिभाविनो
भवत्यमूर्छाव्रतिनः प्रवेदनम्।
त्यजन्ति सन्तो मधुमद्यमांसकं
व्रतेषु पुष्टिं[3] विधिवद्विधित्सवः ॥ २७ ॥

२७. भवस्येत्यादि। अमूर्छाव्रतिनः अतिकाङ्क्षारहितस्य पुंसः, पूर्वापर-कोटिभाविनः—पूर्वश्चापरश्च पूर्वापरौ, तयोः कोटिः—अग्रिः। 'स्त्रियः पाल्यश्रि-कोटयः' इत्यमरः। तत्र भवितुं शीलमस्यास्तीति भावी, तस्य भाविनः; भवस्य प्रवेदनं-ज्ञानं भवति। व्रतेषु पुष्टिं विधिवद् विधित्सवः—विधानयुक्तं यथा भवति तथा विधातुमिच्छवः। सन्तः—मधुमद्यमांसकं-मांसमेव मांसकम्। स्वार्थे कप् प्रत्ययः। मधु च मद्यं च मांसं च-मधुमद्यमांसकं, त्यजन्ति ॥

विविच्य सम्यक्त्वमुदीरितं मया[4]
न तत्परं[5] किञ्चिदिहात्मने हितम्।
व्रतैर्विहीनोऽपि जनस्तदुद्वहन्[6]
न जातु दुःखादिनिवासमृच्छति ॥ २८ ॥

२८. विविच्येत्यादि। मया सम्यक्त्वं, विविच्य-विचार्य उदितं, आत्मने हितं तत्परं; तस्माद्व्रतादन्यद् हितं किञ्चिन्न। व्रतैर्विहीनोऽपि जनः तदुद्वहन् तज्जीवादिपदार्थगोचरश्रद्धानमुद्वहन्, जातु-कदाचित्, दुःखादिनिवासं-नरकं, न ऋच्छति-न गच्छति ॥

---

१ स्थिरं P. २. °चरित्र° P, M. ३. सिद्धिं P. ४. तु यत् P.
५ तत्समं M, P. ६. तदुद्वहन् जनो T.

इह व्रतानां तु विपर्ययैर्जनः
प्रविश्य कष्टं भवनाट्यमण्डपम्।
विधृत्य नानाविधयोनिभूमिकां[1]
परिभ्रमन् क्लेशमुपैति केवलम् ॥ २९ ॥

२९. इहेत्यादि। व्रतानां विपर्ययैः—व्यत्ययैः उपलक्षितो जनः। कष्टं भवनाट्यमण्डपं—संसारनर्तनरङ्गस्थानं प्रविश्य, नानाविधयोनिभूमिकां—नानाप्रकारयोनिप्राणियोनिजनितग्रहरूपम्। यथाह धनञ्जयाचार्यो "राघवपाण्डवीये"—

...निरूप्य तस्यां स कुलायभूमिं
योगीव कश्चित्समयं निनाय। [ द्विसंधानकाव्य V. २ ( N. S. Edn 1895 ) ] इति। विधृत्य परिभ्रमन्—परिभ्रमणं कुर्वन्, केवलं क्लेशमुपैति ॥

यशोधरस्तज्जननी च यावुभौ
निहत्य तौ कृत्रिमताम्रचूडकम्।
भवेषु विभ्रम्य नितान्तदुःखिता—
विमौ तवान्ते वसतोऽद्य कुक्कुटौ ॥ ३० ॥

३०. यशोधर इत्यादि। यशोधरः तज्जननी च यौ उभौ कृत्रिमताम्रचूडकं निहत्य, भवेषु—जन्मसु, विभ्रम्य—विशेषेण भ्रमणं कृत्वा, नितान्तदुःखितौ, अद्य—अधुना, कुक्कुटौ भूत्वा, तावुभौ, तवान्ते—भवतः समीपे, वसतः—तिष्ठतः ॥

करोति दुःखं यदि दूरदुःसहं
वधस्तु सङ्कल्पनया विचेष्टितः[2]।
किमङ्ग साक्षात् किमुतानृतादिभिः
समन्वितोऽसौ यदि सामवायिकैः ॥ ३१ ॥

३१. करोतीत्यादि। सङ्कल्पनया विचेष्टितो वधस्तु यदि दूरदुःसहं—दुःखेन सोढुं शक्यं, दुःसहं। दूरस्थितैरपि दुःसहं, दुःखं करोति। साक्षात् यदि सामवायिकैः—सहायसहितैः; 'समवायश्चयो गणः' इत्यमरः। अनृतादिभिः—अनृतमसत्यं आदौ येषां तानि अनृतादीनि, तानि कानि? स्तेयपरदारग्रहविषयमूर्छनानि। समन्वितोऽसौ वधः। अङ्ग—भो चण्डकर्मन्। किं दुःखं करोति तत् किमुत—तत्किमुच्यते ॥

---

१. °भूमिका. M.  २. °नयापि M, P.

विमुञ्च तद्वत्स विहिंसनादिकं
 ममेदमाजीवनमित्यलं धिया ।
वदन्ति सन्तो हि यदात्मसंविदः
 हिताहितादानविवर्जनं फलम् ॥ ३२ ॥

३२ विमुञ्चेत्यादि । यत् यस्मात् कारणात्, सन्त आत्मसंविद – आत्मज्ञानिन', आत्मविचारपरस्य पुस. हिताहितादानविवर्जन–हितस्वीकाराहित परिहरण फल वदन्ति । तत्–तस्मात् कारणात् वत्स–भो पुत्र, विहिंसनादिकं विमुञ्च । ममेदमाजीवनमिति धियाऽलम् ॥

इद वचस्तस्य निशम्य सन्मुने
 स चाददे दृष्टिमणुव्रतोत्तराम् ।
अनुस्मृतातीतभवौ च कुक्कुटौ
 ततो मुदा चुकुशतुश्च तावुभौ ॥ ३३ ॥

३३ इदमित्यादि । तस्य सन्मुनेरिदं वच निशम्य स चण्डकर्मा च अणुव्रतोत्तरां दृष्टिं सम्यग्दर्शन जिनमताभिरोचन, यदाह वीरणन्दी मुनिः चन्द्रप्रभमहाकाव्ये—

ज्ञानमर्थपरिबोधलक्षणं
दर्शनं जिनमताभिरोचनम् ।
पापकर्मविरतिं स्वभावत
कीर्तितं चरितमात्मवेदिभि ॥ [ चन्द्रप्रभकाव्य, VII 50
 ( N S Press 2nd Edn ) with slight variants ]

इति । आददे स्वीकृतवान् । ततोऽनन्तरं अनुस्मृत्या तावुभौ कुक्कुटौ च, मुदा–हर्षेण, चुकुशतु –आक्रोशन कृतवन्तौ ॥

नृपस्तदानीं धनुषि स्वकौशलं
 मृगीदृशे दर्शयितु कृतोद्यम ।
विविच्य विव्याध निनादवेधिना
 शरेण तौ पञ्जरवासिनौ खगौ ॥ ३४ ॥

३४ नृप इत्यादि । तदानीं मृगीदृशे कुसुमावलीनामधेयकलितायै । धनुषि स्वकौशलं दर्शयितु कृतोद्यमो नृपो यशोमति , पञ्जरवासिनौ तौ खगौ–ताम्रचूडौ, निनादवेधिना–शब्दवेधिना शरेण, विविच्य–पृथक्कृत्य, विव्याध– मारितवान् ॥

विमुक्तवन्तौ व्रतरत्नबन्धुरं
मन समाधाय तनु पतत्रिणौ ।
अधत्त गर्भे कुसुमावली तदा
मणी व गूढद्युतिवन्धनौ खनि ॥ ३५ ॥

३५ विमुक्तेत्यादि । व्रतरत्नबन्धुर मन समाधाय व्रतमेव रत्न व्रतरत्न, तेन, बन्धुर–मनोहर, मन –चेत , समाधाय–समाधानमुपशम कृत्वा, तनु–शरीर, विमुक्तवन्तौ तौ पतत्रिणौ । तदा कुसुमावली गर्भे अधत्त । कथमिव ? खनि – रत्नजननभूमि । 'खनि स्त्रियामाकर स्यादि'त्यमर । गूढद्युतिबन्धनौ–गुप्त कान्तिनिबन्धनौ, मणीव, 'मणीवादीना वा' (का रू I ६३) इति सूत्रेण च विकल्पतया सन्धि । यदाह हर्षकवि नैषधे—

स्फुटोत्पलाभ्यामलिदम्पतीव तद्–
विलोचनाभ्यां कुचकुड्मलाशया ।
निपत्य बिन्दू हृदि कज्जलाविलौ
मणीव नीता तरले विलेसतु ॥ (IX 80 N S Edn)

असूत सा तौ तनयौ तयो पुमान्
यशोधरश्चन्द्रमती तु कन्यका ।
अवर्धिषाता विधुतत्प्रभानिभौ
जनस्य नित्य नयनामृतायितौ ॥ ३६ ॥

३६ असूतेत्यादि । सा कुसुमावली यौ तनयौ असूत सुषुवे, तयोर्मध्ये यशोधर पुमान् । चन्द्रमती कन्यका । विधुतत्प्रभानिभौ–विधुश्चन्द्र , तस्य चन्द्रमस प्रभा चन्द्रिका, विधुर्नारायण तस्य प्रभा लक्ष्मी । 'पद्मा श्री कमला प्रभा' इति वैजयन्ती । 'विधुर्विष्णौ चन्द्रमसि' इत्यमर । तयो चन्द्रिकयो नारायणलक्ष्म्यो , तयो निभौ, जनस्य नित्य नयनामृतायितौ–नयनयोरमृत यदाचरितौ सन्तौ, अवर्धिषाताम्–प्रवर्धमानौ बभूवतु ॥

विभक्तबाल्ये[1] वयसि प्रकुर्वता–
रुदात्तविद्यासु परिश्रमं तथा ।
नृपो वनान्ते नियमस्थितं मुनिं
निरूपयन्नेव ययौ मृगाटवीम् ॥ ३७ ॥

३७ विभक्तेत्यादि । बाल्ये विभक्त–विभजित विभजनेन रहित, त्यक्तं, बाल्य–शिशुत्व, यत्र–यस्मिन् वयसि । तयो यशोधरचन्द्रमत्यो , उदात्त

१ विधुवत् P २ तायतौ P ३ विमुक्त M T ४ बोधे P

वियासु–अधिकराजवियासु, विया. का ? आन्वीक्षिकी त्रयी वार्ता दण्डनीतिरिति चतस्रो राजविया , तासु । परिश्रमं कुर्वतोस्सतो । 'षष्ठी चानादर' (शा. व्या सू I III 183) इति सूत्रेण सत्यर्थे षष्ठी भवति। यदाह वीरणन्दी मुनि "चन्द्रप्रभमहाकाव्ये"—

गृहागत त मद्मूढमानसो
जनस्य हाहेति रवेण पश्यत ।
तथा समास्फालयति स्म भूतले
यथा स सर्वावयवैर्व्ययुज्यत ॥

इति। नृपोऽपि यशोमति , वनान्ते–वनमध्ये, 'अन्तो नाशावसाने च मध्ये पूर्वनिरन्तरे' इति विश्वप्रकाश । नियमस्थित मुनिं निरूपयन्नेव–विलोकयन्नेव मृगाटवीं ययौ ॥

ततो मृगाणामनवाप्य हिंसनं
निवर्तमानो वदनेन शुष्यता ।
मृगव्यविघ्नोऽयमिति क्रुधा मुना–
वमोचयत्पञ्चशतीं स शौवनीम् ॥ ३८ ॥

३८ तत इत्यादि । ततस्तत्र वने मृगाणा हिंसन अनवाप्य शुष्यता वदनेन निवर्तमानस्य यशोमते , अय मुनि दुरात्मा नावलोकनीय न , यतो मृगव्यस्य विघ्नो बभूव–आखेटनस्य प्रत्यूह , 'विघ्नोऽन्तराय प्रत्यूह ', 'आखेटन मृगव्य स्याद' (?)–उभयत्राप्यमर । इति कृत्वा, मुनौ पञ्चशतीं शौवनीं–शुनां समह शौवनी, तथोक्ता । 'स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्रस्य ल्वादेर्ड्केक ' (शा व्या सू II III 56) इति सूत्रेण श्वन् शब्दस्य वकारस्यौकारादेश , तस्मादणि । मुनौ सुदत्ताचार्ये, अमोचयत मोचयति स्म ॥

तप प्रभावात्तमनिघ्नतीं पुन-
र्विलोक्य ता तत्र विवृद्धमत्सरम् ।
स्वदस्तर्हिंसां कलयन्तमागतो
वणिक्कु कल्याणसुहृत्प्रसङ्गत ॥ ३९ ॥

३९ तप इत्यादि । तप प्रभावात्त मुनिमनिघ्नन्तीं–आबाधाकारिणीं तां सारमेयसहतिं, विलोक्य तत्र मुनौ, विवृद्धमत्सर–प्रवर्धमानमन्यु, 'अन्याभि-

१ °वचोदयत् T

वृद्धयसहनेऽमर्षे मन्ने तु मत्सरः' इति विश्वप्रकाशः। स्वहस्तहिंसां–स्वस्य हस्तः करः; 'हस्तौ तु पाणिनक्षत्रे' इत्यमरः। तेन हिंसां कलयन्तं–मन्यमानं; यशोमतिं प्रसङ्गतः–ग्रामान्तरव्यवहारतः, कान्तारं संगच्छन् कल्याणसुहृत्–कल्याणनामधेयमित्रं वणिक् श्रेष्ठी श्रेष्ठः, आगतः–स्वयमेवाययौ॥

उपद्रवं तस्य मुनेर्विलोकय–
यथोचदेवं स तदा यशोमतिम्।
महामुनौ देव नमस्क्रियोचिते
किमीदृशं कर्तुमिह त्वमर्हसि॥ ४०॥

४०. उपद्रवमित्यादि। तदा तस्य मुनेरुपद्रवं–बाधां विलोकयन् स वणिगेव यशोमतिं राजानमवोचत्। देव–भो राजन्, त्वमिह नमस्क्रियोचिते–नमस्कारार्हे, महामुनौ–सुदत्ताचार्ये, ईदृशमकर्तव्यं कर्तुमर्हसि किम्॥

दुरीहितं किञ्च यदत्र तत्परं
तदेव[१] मुष्णाति भवे भवे शिवम्।
मनस्तु नित्यं तपसि[२] स्थिरं वह–
न्नजय्यशक्तिः शतयज्वनोऽप्ययम्॥ ४१॥

४१. दुरीहितमित्यादि। किञ्च विशेषोऽस्ति। अत्र–मुनौ तव यद् दुरितमस्ति, तदेव भवे भवे–जन्मनि जन्मनि, परं–अधिकं शिवं–कल्याणं। 'श्वःश्रेयसं शिवं भद्रं कल्याणं मङ्गलं शुभं' इत्यमरः। मुष्णाति–अपहरति। तपसि नित्यं स्थिरं यथा भवति तथा मनो वहन्नयं मुनिः शतयज्वनोऽपि शतमख-स्यापि, अजय्यशक्तिः–जेतुं शक्या जय्या; न जय्या अजय्या; अजय्या शक्ति-र्यस्य सः असावजय्यशक्तिः॥

अहर्पणोऽप्येष[३] करोत्यनुग्रहं
विनिग्रहायैष भवत्यकोपनः।
अनारतं[४] ज्ञानसमाहितात्मना–
मलोकसामान्यमिदं हि[५] चेष्टितम्॥ ४२॥

४२. अहर्पण इत्यादि। एष मुनिः अहर्पणोऽपि–रागरहितोऽपि अनुग्रहं–दयां, सकलप्राणिषु करोति। एषः अकोपनः सन् विनिग्रहाय–विषयनियमनाय भवति। तथाहि, अनारतं–अनवरतं ज्ञानसमाहितात्मनां–ज्ञानेन समाहितो गोप्यात्मा यत्नो

१. तवैव, M, P. २. तदपि T. ३. अमर्षणो T, E. ४. अनातुर P. ५. वि P

येषां ते तेषां मुनीनां इदं चेष्टितमलोकसामान्यं—न लोकः, अलोकः, जनः, 'लोकस्तु भुवने जने' इत्यमरः। समानस्य भावः सामान्यम्। जनवर्तनातिक्रान्तमिति यावत् ॥

ततोऽस्य भक्त्या प्रणिपत्य पादयो-
र्गृहाण वाचं कृतदोषशोधनीम्[1]।
प्ररोचते तुभ्यमिदं हि मद्वचो
न चेदधस्तादवपातुमिच्छसि ॥ ४३ ॥

४३. तत इत्यादि। ततस्तस्मात्कारणात्। भो राजन्, त्वमस्य मुनेः पादयोर्भक्त्या प्रणम्य, कृतदोषशोधनीं—विरचितपापपरिहारिणीं अस्य सुदत्ताचार्यस्य वाचं भारतीं, गृहाण—स्वीकुरु। इदं मद्वचः तुभ्यं न रोचते चेत्, 'यस्मै देवे'ति सूत्रेण चतुर्थी। त्वमधस्तादधोलोकं नरकमवपातुं—गन्तुमिच्छसि ॥

नृपस्तु तं प्रत्यवदत्कथं त्विमं
नमेयमस्नानतनुं मलीमसम्।
कुलेन[2] कोऽसाविति निर्णयादृते
वने मृगव्यस्य च विघ्नकारिणम्[3] ॥ ४४ ॥

४४. नृप इत्यादि। नृपः तं वणिजं प्रति अवदत्। अस्नानतनुं—स्नानरहितशरीरं, मलीमसं—स्नानरहितत्वादङ्गे मलधारिणं कथं नमेयं—नमनस्य योग्यो नमेयः, कथं केन प्रकारेण नमेयः, तं। कुलेन—वंशेन असौ कः इति निर्णयात्—निश्चयात् ऋते। 'समौ निर्णयनिश्चयौ' इत्यमरः। वने मृगव्यस्य—आखेटनस्य विघ्नकारणं—प्रत्यूहहेतुं इमं पापिनं किमर्थं वर्णयसि केन प्रकारेणापि नमनायोग्यमिति यावत् ॥

वणिक्त्ववादीदयमेव सर्वदा
शुचिः सदाचारनिरुद्धकिल्बिषः।
जलेन शुद्धिस्त्वपवित्रचेतसां
पुरीषमूत्रैर्बहिरम्बुमार्जनम् ॥ ४५ ॥

४५. वणिगित्यादि। वणिक् कल्याणमित्रं राजानमित्यवादीत्। सदाचारनिरुद्धकिल्बिषः—सदाचारेण—प्रशस्तचारित्रेण निरुद्धं किल्बिषं पापं येन स तथोक्तः। 'अस्त्री पङ्कं पुमान् पाप्मा पापकिल्बिषकल्मषम्' इत्यमरः। अयं सुदत्ता-

---

१. 'शोधिनीम् M, P. २. कुले च P. ३. विघात' P.

चार्यः सर्वदा शुचिः; तथाहि—अपवित्रचेतसाम्—पवित्रेतरचित्तानाम्; 'पवित्रः प्रयतः पूतः' इत्यमरः। जलेन शुद्धिः तु नीरस्नानमिति। पुरीषमृष्टेः—वर्चोनिचितमृष्टेः; 'पुरीषं गूथवर्चस्कम्'इत्यमरः। बहिरम्बुमार्जनं—बहिरुदकप्रक्षालनमिव। यदाह महाभारते व्यासः—

आत्मा नदी संयमतोयपूर्णा
सत्यावहा शीलतटा दयोर्मिः।
तत्राभिषेकं कुरु पाण्डुपुत्र
न वारिणा शुध्यति चान्तरात्मा॥

इति। तथा चाह कविराक्षसः—

द्विजेन्द्रो वा कलाढ्यो वा कामकारी भवन् सदा।
नित्यं निमज्जन्नप्यब्धौ नान्तःशुद्धो भवत्यलम्॥

इति॥

कुलेन गङ्गोऽयमनङ्गनिर्जयी
चिरं कलिङ्गेष्वधिरूढविक्रमः।
सुदत्तनामा पुनरद्य तप्यते
तपः कुतोऽप्युद्धृतभोगलालसः॥ ४६॥

४६. कुलेनेत्यादि। अनङ्गनिर्जयी अयं मुनिः, कुलेन—अन्वयेन, गङ्गः—गङ्गवंशः, इक्ष्वाकुवंशवत् प्रसिद्धियुक्तः। चिरं भृशं कलिङ्गेषु कलिङ्गनामधेयदेशराजत्वे तत्राधिरूढविक्रमः। कुतोऽपि अकस्मात् जातवैराग्यात् उद्धृतभोगलालसः—परिहृतस्रक्चन्दनवनितादिकाङ्क्षः, 'कामोऽभिलाषस्तर्षश्च सोऽत्यर्थं लालसा द्वयो'रित्यमरः। सुदत्तनामासौ पुनरद्य तपस्तप्यते। तपस्तपसीति धातुः। तपेः कर्तरि कर्मवत् कार्यं भवति। कर्मत्वाद्यगादि। तप्यते तपांसि धीरः करोतीत्यर्थः॥

मृगव्यलीलाविनिघातकारणं[1]
यदात्थ[4] देव त्वममुं[5] तथैव तत्।
अमुष्य धर्मप्रकृतेः प्रभावतो
वने न पापर्द्धिरिह प्रवर्तते॥ ४७॥

४७. मृगव्येत्यादि। देव, भो राजन्, अमुं मुनिं मृगव्यलीलाविनिघातकारणं, यदात्थ—यद् ब्रवि, तत् तथैव। धर्मप्रकृतेः धर्मप्रधानस्य, 'प्रधानं प्रकृतिः

१. °प्युज्झित° M, P. २. °विनिपात° P. ३. कारिणं M, P. ४. यदाह P. ५. त्वमिमं M, P.

स्त्रियां ' इत्यमरः । अमुष्य मुनेः प्रभावतः सामर्थ्यादिह वने पापर्द्धिः-मृगव्यं; 'आखेटनं मृगव्यं स्यात् पापर्द्धिर्मृगया स्त्रियां ' इति विश्वः । न प्रवर्तते-न भवति॥

सुहृद्वचस्तत्परिभाव्य भूपति-
स्तमादरेण प्रणनाम पादयोः ।
अमन्यतैवं शिरसैनमर्चयन्
करोमि सद्यः परिशुद्धिमागसः ॥ ४८॥

४८. सुहृदित्यादि । भूपतिः सुहृद्वचः परिभाव्य, आदरेण तममुं पादयोः प्रणनाम । सद्यः, शिरसा-स्वकीयकरवालविदारितस्वमस्तकेन, एनं मुनिमर्चयन्, आगसः-निजापराधस्य परिशुद्धिं करोमि इति मनस्यमन्यत ॥

मुनिश्च राज्ञः स्वशिरश्छिकर्तिषो-
र्निवार्य हस्तेन हृदिस्थमब्रवीत् ।
सविस्मयस्तं समपृच्छदादरा-
त्पितामहादेर्गतिमुर्वरापतिः ॥ ४९ ॥

४९. मुनिरित्यादि । मुनिश्च, स्वशिरश्छिकर्तिषोः-स्वकीयमस्तकविदलन-करणकामस्य राज्ञः हृदिस्थं-अलुक्समासः 'हलदन्तात्सप्तम्याः' इति । हृदयस्थितं उद्योगं कृत्यं हस्तेन निवार्य अब्रवीत् । सविस्मयः उर्वरापतिः आदरात् पितामहादेर्गतिं अपृच्छत्-पप्रच्छ ॥

ततोऽवधिज्ञाननिरूपितं मुनि-
र्यथावदाख्यन्नृपतेर्मनीषितम् ।
पितामहस्ते तपसा स पद्ममा-
त्परं नृपः स्वर्गमगच्छदूर्जितम् ॥ ५० ॥

५०. तत इत्यादि । ततोऽनन्तरं मुनिः सुदत्ताचार्यः अवधिज्ञाननिरूपितं अवधिज्ञानेन उदीरितं नृपतेर्मनीषितं यथावदाख्यत्-अब्रवीत् । तत्कथम् । भो राजन्, ते तव पितामहः-पितृपिता, 'पितामहः पितृपिता' इत्यमरः । यशोघः तपसा तपोबलेन पद्ममात् ब्रह्मकल्पात् परमन्यं ब्रह्मोत्तरमिति ऊर्जितं-श्रेष्ठं स्वर्गमगच्छत् । ब्रह्मोत्तरमिति षष्ठं नाकमुपगतवान् ।

स तत्र दिव्याभरणैर्विभूषितो
नवोदितादित्यनिभश्च तेजसा ।
सुखानि देवीनिवहेन निर्विश-
न्ननूनकामो रमते दिवानिशम् ॥ ५१ ॥

५१. स इत्यादि । तत्र षष्ठस्वर्गे दिव्याभरणैर्विभूषित, तेजसा च नवोदितादित्यनिभः देवीनिवहेन साकं सुखानिर्विशन् अनुभवन्, अनूनकाम. सन् दिवानिशं–अनवरत रमते ।

विषेण हत्वा निजमेव वल्लभं
तथापि माता व्यजनिष्ट कुष्ठिनी ।
मृतापि[1] सा दुर्गतिमभ्युपेयुषी
सुदुःखिता सीदति वत्स पञ्चमीम् ॥ ५२ ॥

५२. विषेणेत्यादि । राजन्, तव मातापि निजवल्लभमेव यशोधर, विषेण–गरलेन हत्वा अष्टदकुसयोगात् कुष्ठिनी अजनिष्ट–अजनि । दीपजनबुधेत्यादि-सूत्रेण लुङ् । तदुपरि मृता सा अमृतमती, भो वत्स, पञ्चमीं धूमप्रभां दुर्गतिमभ्युपेयुषी सती सुदुःखिता भूत्वा सीदति, क्लिश्नाति ।

यशोधरस्ते जनकः पतत्रिणं
निहत्य तद्दोषवशेन कृत्रिमम् ।
बभूव केकी शललोऽथ मीनक-
श्छागो द्विवारं क्रमतश्च कुक्कुटः ॥ ५३ ॥

५३. यशोधर इत्यादि । भो राजन्, ते तव जनको यशोधर कृत्रिम पतत्रिणं निहत्य, शालिपिष्टमयं कुक्कुटं निहिंस्य, तद्दोषवशेन प्रथम केकी–मयूरो बभूव । अथ–अनन्तर, शललो–शल्यको बभूव । तदुपरि मीनक. लोहिताक्षनामधेय वारिणि बभूव । द्विवार–द्विप्रकारेण, छाग.–बस्तक. बभूव, क्रमतश्च कुक्कुटो बभूव

यशोधसूनोर्जननी क्रमादभू-
दनल्पदुःखा तत एव दोषतः ।
ससारमेयो भुजगश्च नक्रक-
श्छागाङ्गना सा महिषोऽथ कुक्कुटी[4] ॥ ५४ ॥

५४. यशोध इत्यादि । यशोधसूनो. यशोधरस्य जननी चन्द्रमती तत एव दोषत तस्मात् कृतकुक्कुटहननसभूतभूरिदोषात् । अनल्पदुःखा सती ससारमेयो

१. नवोदया° P २. मृता च P, M ३ साधोगति° P, M ४ कुक्कुट T, M

यः सारमेयेण रात्रिजागरेण सारितो भुजगोऽभूत्। प्रथमं कुक्कुरो बभूव। तदुपरि कृष्णसर्पोजनि। तदूर्ध्वं नक्रः शिशुमारोऽभूत्। तदुपरि छागाङ्गना, धर्करयोपिद् भूत्। क्रमशो महिषो लुलायोऽजनि। अथ-अनन्तरं कुक्कुटी चाभूत्।

> ततो वनान्ते भवता निपातितौ
> धनुर्भृता भूमिप शब्दवेधिना।
> विमृत्य[1] शुद्ध्या कृकवाकुनन्दना-
> विमावभूतां कुसुमावलीसुतौ ॥ ५५ ॥

५५. तत इत्यादि। भो भूमिप, धनुर्भृता-कोदण्डधारिणा भवता शब्दवेधिना बाणेन निपातितौ क्षतौ, कृकवाकुनन्दनौ-ताम्रचूडपुत्रौ। शुद्ध्या-मुनिनिरूपितसद्धर्मश्रवणानुरागपरिणामेन विमृत्य-मरणं प्राप्य, इमौ कुसुमावलीसुतावभूताम्॥

> इति स्वसंकल्पनयापि हिंसया[2]
> निशम्य[3] घोरं भवविभ्रमं पितुः।
> नृपः स भीतो बहुजीवघाततो
> व्यधत्त वैराग्यरसाधिकं मनः॥ ५६ ॥

५६. इतीत्यादि। नृपो यशोमतिः स्वसंकल्पनया हिंसया, पितु:-जनकस्य, घोर-भीष्म, भवविभ्रम-संसारभ्रमण, निशम्य-श्रुत्वा, बहुजीवघाततः भीतो भूत्वा, मन-चेतः, वैराग्यरसाधिक-विरागस्य भावो वैराग्य तस्मिन्। रसो धैर्य 'शृङ्गारादौ विषे वीर्ये गुणे रागे द्रवे रस.' इत्यमर। तेनाधिक व्यधत्त-अकरोत्।

> तदीयपुत्रावपि तत्क्षणे[4] गतौ
> मुनीश्वरे वक्तरि तद्भवक्रमम्।
> विभक्तमन्वस्मरतामपि स्वयं
> प्रबोधकप्रायभवा खलु स्मृतिः ॥ ५७ ॥

५७. तदीयेत्यादि। मुनीश्वरे तद्भवक्रमं तयोर्यशोधरचन्द्रमत्योः भवः जनन, तस्य क्रम वक्तरि सति तत्क्षणे गतौ-तदैव समागतौ। तदीयपुत्रौ-यशोमतिपुत्रौ। अभयमत्यभयरुचिकुमारौ विभक्त पृथक् पृथक् स्वयमप्यन्व स्मरतां-अनुस्मरतः। तथा हि-स्मृतिः स्मरण, प्रबोधकप्रायभवा हि-ज्ञातृजनप्रतिबोधनात् प्रचुरभवा हि॥

---

१. विमृत्य T. २ हिंसनात् P ३ निशम्य T ४. °क्षण P.

ततश्च निर्वेगपरो नराधिपो
नराधिनाथैर्बहुभिः समन्वितः।
विमुच्य राज्यं तनये तपोऽग्रही-
द्वणिक्च कल्याणसुहृन्महामतिः ॥ ५८ ॥

५८. तत इत्यादि। ततोऽनन्तरं निर्वेगपरो वैराग्यतत्परः नराधिपः— यशोमतिः तनये; अभयरुचिकुमारे राज्यं विमुच्य-निक्षिप्य, बहुभिः नराधिनाथैः सहितः समन्वितः भूत्वा सुदत्ताचार्यसमीपे तपोऽग्रहीत्। महामतिः तत्त्वा-लोकनचतुरमतिः वणिक्श्रेष्ठी श्रेष्ठः कल्याणसुहृत्-कल्याणमित्रं तु तपोऽग्रहीत्। जीवनदीक्षां जग्राह ॥

पितुस्तपोविघ्नभयात्तदात्मज-
स्तदा गृहीतं[1] नरनाथवैभवम्।
विरक्तचेता विषयेषु दत्तवा-
न्यशोधराख्याय निजानुजन्मने ॥ ५९ ॥

५९. पितुरित्यादि। तदात्मजः यशोमतेः सुतोऽभयरुचिकुमारः पितुः यशोमतेः तपोविघ्नभयात्-तपसः अन्तरायभयात्, तदा गृहीतं कर्मभूतं नरनाथ-वैभवं विषयेषु विरक्तचेता भूत्वा यशोधराख्यनिजानुजन्मने-स्वकीयानुजाय, दत्तवान् -यच्छति स्म ॥

ततो भगिन्या सह मुक्तमोहया
सुदत्तमासाद्य महामुनीश्वरम्।
त्यजन् परिस्पन्दमनिन्दया[2] धिया
विमोक्षविद्यासु[3] गणैरशिक्ष्यत[4] ॥ ६० ॥

६०. तत इत्यादि। ततोऽनन्तरं अभयरुचिकुमारः मुक्तमोहया भगिन्या— स्वस्रा, अभयमत्या सह सुदत्तमासाद्य, अनिन्दया धिया परिस्पन्दं-परिग्रहं, परि-त्यजन् विमोक्षविद्यासु-निःश्रेयसनिमित्ततत्त्वविद्यासु। गणैः-जिनमुनिसमुदायैः अशिक्ष्यत-'शिक्ष विद्योपादाने' इति धातौ कर्मणि लङ् ॥

---

१. °ग्रहीत् T. २. °मनिन्दितो P; °ममन्दया M. ३. गुणे° M, T, P. ४. °रशिक्षत P.

इत्थं यौ नृपतनयौ यशोमतीयौ
कान्तारे गुरुचरणावुपासिषाताम् ।
आवां तावभयरुचिं तयोस्तु नाम्ना
मामुच्चैरभयमतीमिमां वदन्ति ॥ ६१ ॥

६१. इत्थमित्यादि । यशोमतीयौ-यशोमतीसम्बन्धिनौ । 'द्रोः छः' ( शा. व्या. सू. I. iii. 26 ) इति सूत्रेण सम्बन्धार्थे छप्रत्ययः । इमौ तनयौ राजकुमारौ यौ कान्तारे गुरुचरणौ सुदत्ताचार्यपादौ उपासिषातां उपासनां चक्रतुः । 'शासु अनुशिष्टौ' इति धातौ लुङ् । तावावां तयोस्तु नाम्ना मामुच्चैः अभयरुचिं वदन्ति । इमां अभयमतीं वदन्ति ॥

अद्य ते नगरतो बहिर्वने
मारिदत्त वसतो महामुनेः ।
भिक्षणाय[1] नियमादिहागता-
वग्रहीष्वहि तु चण्डकर्मणा ॥ ६२ ॥

६२. अद्येत्यादि । भो मारिदत्त, ते तव नगरतो बहिर्वने नगरात् बहिःस्थित-वने 'गिरिनद्यादीनामि'ति णत्वम् । वसतः-संतिष्ठमानस्य, महामुनेः सुदत्ता-चार्यस्य नियमात्-नियोगादिह पुरे भिक्षणाय-आहाराय आगतौ आवां । चण्ड-कर्मणा त्वग्रहीष्वहि । स्वीकृतवन्तौ । ग्रह उपादाने इति धातौ लुङि उत्तमपुरुष-द्विवचनम् ॥

सङ्कल्पहिंसाजनितं तु घोरं
भवेषु दुःखं तदिदं स्मरन्तौ ।
विमुच्य बाल्येऽपि विभूतिमिद्धा-
मास्तां हि शिष्यौ[2] मुनिपुङ्गवस्य§ ॥ ६३ ॥

६३. संकल्पेत्यादि । संकल्पहिंसाजनितं भवेषु-जन्मसु, घोरं-भयंकरं तदिदं दुःखं तौ अभयमत्यभयरुचिकुमारौ बाल्ये शिशुत्वेऽपि, इद्धां-उज्ज्वलां, विभूतिं-संपदं, विमुच्य-त्यक्त्वा, मुनिपुङ्गवस्य-सुदत्ताचार्यस्य शिष्यावन्तेवासिनौ । आस्तां हि । अभवतां खलु । 'अस भुवि' धातौ लङ् परस्मैपदद्विवचनम् ॥

---

1. वीक्षणाय T. 2. शिष्यावभूतां P; मभूव शिष्या M. §. Verses from 64 to 71 are dropped in M.

क्व कृत्रिमपतत्रिणो वधविधि क्व तद्दु सह
भवभ्रमणमावयोरिति मन परीतापिनौ ।
जिघासुमिह जीवराशिमधुना भवन्त पुन
विलोक्य कृतविस्मयौ कृतकृपौ च वर्तावहे ॥ ६४ ॥

६४ क्वेत्यादि । कृत्रिमपतत्रिण कृतकताम्रचूडस्य वधविधि क्व, आवयो दुस्सह भवभ्रमण क्व इति मन परीतापिनौ, नहिवृतिवृषिव्यधिसहित निह्वचि क्वौ तिङ्गारकस्य'ति सूत्रेण ( शा व्या सू II III ९० ) अव्ययरूपोपसर्गस्य वा दीर्घ । अधुना-इदानीं, जीवराशी तिरश्चां निचय, जिघासु हन्तुमिच्छु भवन्त त्वां विलोक्य कृतविस्मयौ आवा कृतकृपौ सन्तौ, वर्तावहे सतिष्ठावहे ॥

§ तदुक्तमाकर्ण्य तु चण्डमारी
विलोक्यमाना सह पौरवर्गै ।
अवेत्य तौ स्वस्य च भ गिनेयौ
स मारिदत्तो नृपतिर्जहर्ष ॥ ६५ ॥

६५ तदुक्तमित्यादि । चण्डमारी पौरवर्गैसह पुरजनसन्दोहैस्साक, तदुक्त-तस्य अभयरुचिकुमारस्य, उक्त-वचन । ' उक्त भाषितमुदित चर्वितमाख्यात मभिहित लपितम्' इत्यमर । आकर्ण्य श्रुत्वा । पुरजनसचयैर्विलोक्यमाना सती, जहर्ष-हृष्टवती, स मारिदत्तो नृपतिश्च तावभयमत्यभयरुचिकुमारौ स्वस्य भागिनेया-ववेत्य स्वसृपुत्राविति विज्ञाय, जहर्ष-हर्ष कृतवान् ॥

विरक्तिमासाद्य[1] तु चण्डमारी
विलोक्यमाना वपुषा जनौघै ।
ननाम युग्म वधदु खभीरु
स्तदाज्ञयास्तादितं[2]शुद्धदृष्टि ॥ ६६ ॥

६६ विरक्तिमित्यादि । वधदु खभीरु -बहुप्राणि, हिंसनसञ्जातदु खाद्भीता चण्डमारी, जनौघै विलोक्यमाना, वपुषा चरणयुगलचलनकरणपरिणतशरीरेणाप-लक्षिता भूत्वा, अभयरुचिकुमारचरणसमीप स्वयमेव गत्वा, तदाज्ञया तस्य कुमार-

---

§ This verse as such is not found in any of the Mss Some of the lines are found repeated however, with slight changes, in the next two verses

१ तदुक्तिमाकर्ण्य P, तदुक्तमाकर्ण्य L. २ ॅपादित P

स्यादेशेन, आसादितशुद्धदृष्टिः–स्वीकृतसम्यग्दर्शनव्रती युग्मं–वर्णिद्वयं, ननाम–नमति स्म ॥

पूजयन्तु शुचिभिः कुसुमाद्यै–
मामितःप्रभृति मत्पदभक्ताः ।
कुर्वतस्तु वधमत्र कुटुम्बं
नश्यतीत्यभिनिवेद्य तिरोऽभूत् ॥ ६७ ॥[1]

६७. पूजेत्यादि । मत्पदभक्ताः–मम पदयोः भक्ताः, इतः प्रभृति–इत ऊर्ध्वं मां कुसुमाद्यैः कुसुमाक्षतजलगन्धदीपधूपबलिफलैः पूजयन्तु । अत्र–मयि निमित्ते 'निमित्तात्कर्मणि' इति सूत्रेण (का. रू. I ४२५) सप्तमी । वधं कुर्वतः पुंसः कुटुम्बं नश्यतीति अभिनिवेद्य–अभितो ज्ञापयित्वा, शापं कृत्वा वा । 'शापस्त्वभिनिवेदनम्' इति विश्वः । तिरोऽभूत्–तिरोदधे ॥

अपि च कुसुमदत्ते पुत्रवर्ये स्वराज्यं
विषयसुखविरक्तो मारिदत्तो विधाय[2] ।
वनगतमथ ताभ्यां श्रीसुदत्तं प्रपन्नो
निरुपमविनयश्रीः संयमित्वं प्रपेदे ॥ ६८ ॥

६८. अपि चेत्यादि । विरक्तः–बहुजीवहिंसनभयात् वैराग्ययुतः मारिदत्तः कुसुमदत्ते पुत्रवर्ये स्वराज्यं, विधाय–कृत्वा, अथ–अनन्तरं, वनगतं श्रीसुदत्तं वनमध्यावतिष्ठमानं श्रीसुदत्ताचार्यं, ताभ्यां वर्णिद्वयेन सार्धं प्रपन्नः–संप्राप्तो, मारिदत्तः निरुपमविनयश्रीः भूत्वा संयमित्वं–मुनेः प्रसन्नतयान्तेवासित्वं प्रपेदे–प्राप्तः । इदं मालिनीवृत्तम् ।

विद्यामधीत्य सुचिरं गुरुसंनिधाने
तप्त्वा तपश्च बहिरन्तरिति द्विभेदम् ।
त्यक्त्वा समाधिविधिना तनुमायुरन्ते
देवोऽभवत्स नृपतिस्त्रिदिवे तृतीये ॥ ६९ ॥

६९. विद्यामित्यादि । नृपतिर्मारिदत्तनामधेयो मुनिः, गुरुसंनिधाने–सुदत्ताचार्यसमीपे विद्यां–तत्त्वावलोकनादिचतुर्विधां सुचिरमधीत्य । बहिरन्तरिति द्विभेदं तपश्च तप्त्वा–कृत्वा । आयुरन्ते–आयुषोऽवसाने, समाधिविधिना संन्यसनविधानेन तनुं शरीरं त्यक्त्वा तृतीये त्रिदिवे स्वर्गे, देवोऽभूत् । इदं वृत्तं वसन्ततिलकाभिधानम् ॥

---

1. After this, T and P have a verse 67 consisting of *ab*, viz., देव्या तयोरर्चनया तयैव । क्रियमाणः ... पौरवर्गे, and *cd* being same as *65 cd*. 2. निधाय P.

अल्पं निजायुष्यमवेत्य तौ च[1]
तपश्चरित्वा यमलौ यथोक्तम्।
योगेन निर्मुच्य शरीरबन्ध-
मीशानकल्पेऽनिमिषावभूताम् ॥ ७० ॥

७०. अल्पमित्यादि। तौ यमौ–तद्दर्णिद्वयं, निजायुष्यमल्पमवेत्य, यथोक्तं–आगमोक्तिमनतिक्रम्य, तपश्चरित्वा–रचयित्वा, योगेन–ध्यानेन, 'योगः संनहनोपायध्यानसंगतियुक्तिषु' इत्यमरः। शरीरबन्धं निर्मुच्य–त्यक्त्वा ईशानकल्पे–द्वितीयनाके, अनिमिषौ–देवौ, 'अमरोऽनिमिषः सुरः' इति विश्वः। अभूतां–सञ्जातौ। इयमिन्द्रवज्रा ॥

अमरवनितामारस्मेरावलोकनगोचरं
तरुणतरणिच्छायाचोरं चिरं[2] दधतौ वपुः।
विषमभवनिःसारीकर्तुर्मुनेः स्मरणावहौ
परमसुखिनौ रेमाते तौ सुरावसथस्थितौ ॥ ७१ ॥

७१. अमरेत्यादि। अमरवनितामारस्मेरावलोकनगोचरं–अमरवनितानां, मारात्–कामात् सञ्जातं स्मेरावलोकनं, तस्य गोचरं–विषयं, तरुणतरणिच्छायाचोरं–तरुणश्चासौ तरणिश्च तरुणतरणिः, तस्य छाया–कान्तिः; 'छाया सूर्यप्रिया कान्ति'रित्यमरः; कान्तेश्चोरं–स्तेयं, वपुः–शरीरं चिरं दधतौ। विषमभवनिःसारीकर्तुः–विषमश्चासौ भवश्च विषमभवस्तम्। निस्सारीकर्तुः–अनिस्सारं निस्सारं करोतीति निस्सारीकर्ता, तस्य मुनेः सुदत्ताचार्यस्य स्मरणावहौ–स्मृतिं कुर्वन्तौ। 'स्मृत्यर्थकर्मणि' इति सूत्रेण (का. व्या. सू. II iv.39) कर्मणि षष्ठी। परमसुखिनौ, सुरावसथस्थितौ–सुराणामावसथः सद्म। 'वसत्यावसथावासः' इति धनंजयः। तत्र स्थितौ तौ देवौ। रेमाते–रमणं चक्रतुः। इदं हरिणीवृत्तम् ॥

स्वर्गाधिरोहमवधार्य तयोः सुदत्ता-
यौधेयभूतलपतेश्च तपोबलेन।
तद्विप्रयोगजनितं प्रविमुच्य शोकं
प्रीतिं यशोधरनृपः परमां जगाम ॥ ७२ ॥

७२. स्वर्गेत्यादि। यशोधरनृपः सुदत्ताचार्यात् तयोरभयमत्यभयरुचिमुन्योः, यौधेयभूतलपतेर्मारिदत्तमुनेश्च तपोबलेन स्वर्गाधिरोहमवधार्य–निश्चित्य, तद्विप्रयोगजनितं–तेषां वियोगसंभूतं शोकं शुचं प्रविमुच्य–त्यक्त्वा, परमां प्रीतिं जगाम। इयमपि वसन्ततिलका ॥

---

1. धीरौ P.   2. तदा T.

गुरुषु विनयवृत्तिं बन्धुषु प्रेमबन्धं
रिपुषु करकृपाणं दर्शयन्नाहवेषु ।
अधिगतनयसिन्धुः सत्यसन्धः स राजा
रणमुखजयसिंहो राज्यलक्ष्मीं बभार ॥ ७३ ॥

७३. गुरुष्वित्यादि । गुरुषु विनयवृत्तिं दर्शयन्, बन्धुषु–ज्ञातिषु प्रेमबन्धं दर्शयन्, आहवेषु–युद्धेषु 'सङ्ग्रामाभ्यागमाहवाः' इत्यमरः । रिपुषु परिपन्थिषु निमित्तेषु सत्सु । '*निमित्तात्कर्मणी*'ति सूत्रेण (का. रू. I. ४२५) सप्तमी । करकृपाणं करतलकलितखड्गं दर्शयन् । अधिगतनयसिन्धुः–प्राप्तनीतिसमुद्रः, सत्यसंधः सत्यप्रतिज्ञावान् । 'सन्धा प्रतिज्ञा मर्यादा'इत्यमरः । रणमुखजयसिंहः–रणमुखजयसिंहेत्यपरनामधेयविराजमानः स राजा–यशोधरभूपालः राज्यलक्ष्मीं बभार । इयमपि मालिनी ॥

धर्म्ये वर्त्मनि तेजसा नियमयन्वर्णास्तथैवाश्रमा–
न्वृद्धाराधनया हृषीकविजयादुत्तीर्णविद्यार्णवः ।
पारावारपरम्परीणपरमख्यातिर्नयोत्कृष्टधी–
रासेविष्ट यशोधरो नरपतिर्दीर्घं त्रिवर्गश्रियम् ॥ ७४ ॥[1,2]

इति श्रीवादिराजविरचिते यशोधरचरिते महाकाव्ये चतुर्थः सर्गः ।
समाप्तोऽयं ग्रन्थः । §

७४. धर्म्ये इत्यादि । वर्णान्–चतुरो वर्णान्, 'विप्रक्षत्रियविट्शूद्राः चातुर्वर्ण्यम्'इत्यमरः । धर्म्ये वर्त्मनि–अहिंसामार्गे 'धर्मो धनुष्यहिंसायाम्'इति

---

१. P ends here. २. A and F have the following additional verse as the 75 th :—

तावद्भवन्ति मधुरा मधुशर्करादा–
स्तावद् हृषीकविषया हृदयं स्पृशन्ति ।
यावद्यशोधरकथा श्रवणानि पुंसां
श्रीवादिराजरचिता न रसैर्बिभर्ति ॥

§ After the colophon, F records the following eulogy:–

कल्याण· कीर्तमेकं भजतु भवजनात् कौतुकस्यागतोऽयं
मृत्युमीमांगकाया किमिति जडधिय कुर्वते गर्वकूर्सि ।
येनायं न्यायमार्गप्रकटपटुवच प्रौढिपर्यायस्कं
यार्द दुस्तर्कगाढग्रहणपरिवृढान् वादिराजस्तृणेढि ॥

धनंजयः । तेजसा नियमयन्–शिक्षयन्, आश्रमान्–आश्रमचतुष्टयम् । 'ब्रह्मचारी गृही वानप्रस्थो भिक्षुश्चतुष्टयम्' इत्यमरः । तथैव धर्म्ये वर्त्मनि नियमयन् । वृद्धाराधनया–वृद्धसेवया, हृषीकविजयात्–इन्द्रियविजयात् । 'हृषीकं विषयीन्द्रियम्' इत्यमरः । उत्तीर्णविद्यार्णवः–लङ्घितान्वीक्षिकीदण्डनीतिराजविद्यासमुद्रः । पारावारपरम्परीणपरमख्यातिः–पारावारः समुद्रः; 'समुद्रोऽब्धिरकूपारः पारावारः' इत्यमरः । तस्य । परम्परीणा–तीरगा । 'पारावारावारपारेभ्यः खः' ( शा. व्या. सू. III. 1. 2 ) इति सूत्रेण खप्रत्ययः । ( 'घघयलखफघप्रत्ययस्येति न्' । ) परमख्यातिः कीर्तिर्यस्य सः तथोक्तः 'जनोदाहरणं कीर्ति साधुवादं यशो विदुः । वर्णं गुणावलिं ख्यातिम्' इति धनंजयः । यदाह हरिचन्द्रकविः धर्मशर्माभ्युदये

> कृतार्थी कृतार्थी हित त्वा हितत्वात्
> सदानं सदा नंदिनं वादिनं वा ।
> विभालम्बिभालं सुधर्मा सुधर्मा–
> पितख्यापितख्याति सा नौति सानौ ॥
>
> [X. 51 N S Press, 2nd edn 1899]

इति नयोत्कृष्टधीः–नीतावुत्कृष्टबुद्धिर्यशोधरो नरपतिः, त्रिवर्गश्रियं–धर्मार्थकामसम्पदम् । 'त्रिवर्गो धर्मकामार्थै.' इत्यमरः । दीर्घं–चिरं । आसेविष्ट–भजते स्म । इदं शार्दूलविक्रीडितम् ॥

> अकारयदिमां टीकां चिक्कणो गुणरक्षणः ।
> अकरोज्जिनदासोऽय चिक्कणात्मजलक्ष्मणः ॥

इति श्रीवादिराजकृत–यशोधरनामधेय–महाकाव्यटीकायां लक्ष्मणकृतायां चतुर्थः सर्गः ।

> वादिराजकृतकाव्यभावनं
> साधुजैनमुनिपादसेवनम् ।
> वीतरागचरणाब्जलोकनं
> प्रीतयेऽस्तु मम जन्मजन्मनि ॥
> श्रीमत्पन्नणगुम्मटेत्यभिहितौ श्रीवर्णिनौ भूतले
> ख्यातौ चारुचरित्रवार्धिहिमगू तत्प्रीतये लक्ष्मणः ।
> मन्दो बन्धुरवादिराजविदुषः काव्यस्य कल्याणदां
> टीकां क्षेमपुरेऽकरोद्गुरुतरश्रीनेमिनाथालये ॥

---

# YAŚODHARA'S TALE

## Canto I

1. My homage to Lord Suvrata, the cloud laden with waters of rigorous vows, whose deep rumbling is the profound Religion (of Jainism) which makes the peacock, the illustrious king of the gods (Indra), begin to dance in delight.

2. May our Teachers all — *Jina-s, Siddha-s, Sūri-s, Upādhyāya-s* and *Sādhu-s* — bestow on us *nirvāna*, the highest good.

3. May the illustrious Samantabhadra and the others, the excellent mountains of poetic gems, grant us *an abundance of the best gems of expression.*

4 This is a brief account of past history. To those who listen with mindfulness, good things will flow in and evil things will wither away.

5. This work promotes dispassion and secures a clear vision, it annihilates diseases and removes afflictions

6 The same Vādirāja who sang the adventures of Pārśvanātha-Kakutstha, has composed this tale of Yaśodhara.

7. In the land of Bhārata, in the country called Yaudheya, there is a city by name Rājapura, comparable to the city of Rājarāja (Kubera) himself;

8. Whose surrounding fort-wall made of gold, kissing the very clouds, appears always like the halo of the mid-day sun,

9. Wherein the light of the mid-day sun, mingled with the glow of rubies set in the turrets of the mansions, appears like the light of dawn;

10 Which, with its banners fluttering in the wind on the mansions of the wealthy, seems to invite, from above, the needy from every direction ;

11. Wherein, fawn-eyed women, though with limbs of unequal ( also, 'unequalled' ) charm, appear to the gallants sweet in every limb ;

12. Where young princes are liberated from the distress of the fire of passion by caressing against their bosom the breasts of women, like mountains caressing clouds ;

13 Wherein riches, like the learning of the virtuous, grow more and more, even when freely distributed to the needy, day after day.

14 In the unmentionable ( a euphemism for 'southern' ) quarter of that city, stands the goddess Caṇḍamārī to whom animal slaughter is exceedingly dear ;

15 Who, of terrifying countenance, plunges the land and locality in ruin when she is not propitiated with timely sacrifices of animals ,

16 And who, when propitiated duly by the citizens, favours them by destroying famine and deadly epidemics.

17. In the month of Āśvayuja and Caitra, festivals are celebrated in her honour, by citizens headed by the king, to win favours by propitiating her

18 Spring came and announced, as it were, his advent to the goddess through the songs of cuckoos intoxicated by tasting the tender sprouts of mango trees.

19. Causing the red *asoka* bunches to bloom forth on all sides, that season seemed to bring to the goddess his own blood as sacrifice.

20. The cuckoos on the branches of the mango trees in the temple-yard looked like offerings of meat, at the ends of spears, brought by Spring ( the devotee ).

21. Unable to let any delay in the punctual worship of the deity, ( the punctilious ) King Māridatta repaired to the temple of that goddess.

22. At his command, the citizens brought at once, from all quarters, pairs ( i. e. a male and a female ) of various animals.

23. In the temple of the goddess, cocks, goats, stags, boars, buffaloes, etc., bound down by tight ropes, were crying aloud in pain.

24 The earth, rent in several places by their piercing yells, seemed to indicate so many openings of the gateways to Hell.

25. The King pulled out his sword and gave this command to Caṇḍakarman :—" Seek out a human pair endowed with wholesome features

26 After I have sacrificed the human pair with my own hands to the goddess, the citizens shall sacrifice the different pairs of lower animals.

27. Otherwise, there will be a breach of rule, unleashing the fury of the goddess, to the utter destruction of infants and women, cattle and elders."

28 Thus bidden by the King, Candakarman sent his men at once in all directions and set out himself in quest of a human pair.

29. Meanwhile, the wise and eminent sage Sudatta arrived in the garden of that city with a retinue of five hundred ascetics.

30. He was free from the three Defects ( viz., passion, hatred, and ignorance ) and devoid of the Three

Injuries (viz, mental, vocal and physical), his conquest over the Three Darts (viz, falsity, illusion, and evil) was complete and he was not tainted by the Three Prides (viz., of wealth, enjoyment and peace.)

31 He was free from the seven fears (viz, of this world, the next world, ability, unprotection, death, pain and accident), and assuring refuge to all beings. He was ever earnest in the study of scriptures and he was a shining flame of pure wisdom.

32. He was a singular abode of austerities, and a vast ocean of all holy rites He was the shining sun for the lotuses of devotees, and he was taintless in his character and conduct

33 Seated in a holy place there in the company of ascetics, he performed in earnest the prescribed rites after a journey.

34. As the company of ascetics observed a fast that day, the sage commissioned a pair of neophytes to obtain alms for themselves.

35. Bowing down to the sage, the twins set out and were caught on their way by Candakarman who took them later to the King of Rājapura.

36 Abhayaruci (the boy) addressed these words to his sister (Abhayamati) :—"Sister, be reconciled in your mind Do not fear death !

37. Don't you know that pain has lost its edge towards us through our prolonged ascetic life? When the body itself is the source of all pains, how can one expect relief from pain so long as the body endures?

38. Therefore, why should one wail in suffering that which cannot be avoided? The wise ones declare that conquest of suffering is the highest penance."

39. Hearing the words of her elder brother, Abhayamatī declared : " What fear can we have when we know the truth about the past and the future alike ?

40. This is spiritual wisdom, and this its finest fruit . namely, disinterestedness in joy and suffering alike."

41. Consoling each other in this way, the princely pair arrived unvexed at the temple of the terrible Māri.

42. Wherein the floor, bathed in blood and red in hue, was like the out-stretched tongue of the goddess desiring to taste the wine of blood

43. Where the heaps of flesh, infested by swarming flies, looked like the undigested excess of food vomited out by the terrible Māri.

44. Through the fresh human skulls hung on the high projections of the temple-wall, the goddess appeared, as if she were assuming numerous faces and looking for live sacrifices

45. When the king drew near, these wise twins, being urged by the people to bless him, pronounced the following benediction —

46. " O King, may this kingdom be the best governed one by your adopting the code of morality which is conducive to the good of all living beings and which ensures the good of all subjects."

47 Seeing them speak so fearless and free, Māridatta fell into quiet thought, with eyes staring in dismay

48 " Is this perchance a divine pair disguised in human form ? Or perhaps a celestial couple fairer than Cupid and his mate ?

49. Never before have my eyes espied such unexcelled beauty. By luck, at last, my eyes have reaped the reward of their existence.

50. Even after seeing me with the drawn sword and this goddess so relentness, the minds of these two remain unvexed. What a matchless courage!"

51. Then he put them these questions aloud: "Who are you?" "Whence did you come?" "Which is your family?" "For what reason are both of you disinterested in pleasures even in childhood?"

52 Thereupon the wise Abhayaruci replied to him in words whose light dispelled the boundless darkness of sin

53 "Oh King, our account is such as can be liked by the virtuous only. But you are fond of vice. Of what avail is our tale?

54 A perverse nature cannot brook the sight of virtue To one affected by bilious fever, milk does not taste sweet

55 So let our story alone. Do that which thou thinkest good May that which our *karma* has conditioned be our lot We have nothing to complain about."

56 On hearing this, the King threw his sword away and with folded hands importuned him to narrate his story. The prince then started his narration.

57. Meanwhile, the whole lake of royal retinue honoured that waxing moon (viz, Abhayaruci) exuding the nectar of morality, with lotus-buds of folded hands.

58. "Oh King, I heartily congratulate you on your mind being drawn towards the Noble Path. Religious faith, once kindled, will surely bring a benevolent mind to men in course of time.

59. Turn your attentive mind, therefore, to my discourse, dripping with the nectar of holy *Dharma*. Heard with religious faith, it will surely dispel sufferings, one and all.

60. Not only has this been declared by perfected saints (Jinas) who realised the Absolute, but this is our experience also, burnt, as we have been, by a thousand sufferings, time and again.

61 I shall narrate to you, O King, this delightful autobiography of ours, which will serve to dispel all evil. Please do heed the words of the virtuous.

62. The wise ones who will listen attentively to this holy account, quintessential, and conducive to the acquisition of the choicest state of all glory and joy, will surely paint the walls of the directions with their fame, white and radiant as the jasmine and the moon, and attain eternal bliss, after enjoying the highest pleasures in this world.

---

## Canto II

1. There is, in the kingdom of Avantī, the famous city of Ujjayini, abounding in delightful comforts, and competing with the wealthy capital (Amarāvati) of the heavenly king, Indra, in respect of riches.

2. In that city reigned a wise king, with the glorious name Yaśogha, whose boundless valour was exhibited in his annihilation of proud adversaries in many a battle.

3. Since he decked the walls of directions with the paint of his glory, white as lotus, learned men proficient in etymology of words like *pṛṣodara* (*pṛṣat* + *udara*,

where *t* is irregularly dropped), gave him the appropriate name 'Yaśogha' (*yasas* + *ghas*).

4. Even as the paste of red sandal-wood, full of saffron powder and camphor, cooled his hot limbs when smeared over his bosom, so did the moon-faced Candramatī, full of love, abate his love-fever by being pressed to his bosom in privacy.

5 To them was born a glorious son, by name Yaśodhara, matchless in good manners and valour. He was spreading, in all directions, the radiance of his fame, white as the train of waves in the Milky Ocean

6 Abandoning the autumnal moon for fear of fading again as it were, Moonlight made her permanent home in his face, the abode of unfading beauty, and the seat of blooming blue lotuses, namely, the eyes.

7. The broad chest of that beaming prince, adorned by the necklace of shining pearls, seemed as if it were adorned by the radiant smile of the sporting goddess of wealth, residing therein

8. His two massive arms, long like snakes, and like two embodiments of martial valour, served as Rāhu and Ketu to the rising orb of the moon, viz, the host of enemy kings.

9. Smashing down, as he did, the elephants' heads, viz, adversaries, he was a lion through and through in valour. Yet, because his body was the permanent abode of beauty, he attained fame on earth, only as the lion-waisted one.

10. In him who had the best of all virtues, there was nothing middling or low. (Passionate) damsels (interested in the latter) could not, therefore, feel satiated with him.

11. What wonder that his feet, rosy like fresh lotuses (and 'two veritable rubies'), gaining in splendour by applications of unguent (and 'by the work of lapidaries'), attained, by their excellence, the state of crest-jewels for the heads of vassal kings?

12. He had a queen, Amrtamati by name, whose limbs were fashioned as it were out of the moon's sweetest essence. Using her as the pulse, Love became aware of the throbbing delight in the King's heart.

13. He begot through her a son, Yaśomati, a grandson to Yaśogha, delighting the entire world with the nectar of his glory, just as Indra begot Jayanta through Putakratāyī (or Śacī).

14. Yaśogha, transferring the burden of administration to the noble youth, (Yaśodhara,) endowed with all the excellences within himself, became carefree and happy, enjoying the company of royal Lakṣmī for long.

15 Once the King in his court, attended upon by vassals, chanced to sight his grey hairs in the mirror, and religious as he was, renounced his craving for sensual pleasures.

16 At once, he made over his kingdom to Yaśodhara, of mighty prowess, and followed by a hundred kings who were also bent upon renunciation, betook himself to a penance-grove

17. The goddess of sovereignty was full of attachment to him, the new husband, illustrating, as it were, the common nature of women. In every limb she expanded as though nourished by his constant attentions.

